with the help of a single maunscript which I got from the nephew of the late Pandit Khuddi Jha of Koilakha in the district of Darbhanga in Mithila. But after some time, I secured a maunscript of another anthology which has about 800 verses in common with the old one. So I could easily compare the readings in the two maunscripts. The latter one has been indicated in foot-notes as "कपुस्तक". But even then there are several inevitable mistakes left here and there for which I only crave the indulgence of scholars. I am very grateful to our Vice-chancellor Pandit Amaranatha Jha, a real patron of scholarship, who very kindly consented to publish it in the Allahabad University Sanskrit Series as Vol. II. My thanks are also due to Pandit Ramanatha Jha, M.A. Librarian, Raj Darbhanga who took pains to compare the present press copy with the original maunscript, the copy of which I had got for the press.

THE UNIVERSITY
ALLAHABAD
*July 23, 1942.*

UMESHA MISHRA

# विषयसूची

# अथ विद्याकरसहस्रकम्

श्रीगणेशाय नमः

ॐ नमः श्रीकृष्णाय

## मङ्गलाचरणम्

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥१॥

मातस्तर्णक[1]रक्षणाय यमुनाकच्छं न गच्छाम्यहं
मामाश्लिष्य पिनष्टि पीनकुचयोर्भारेण[2] गोपीजनः ।
भ्रूसंज्ञाविनिवारितोऽपि बहुशो जल्पन् यशोदाग्रतो
गोपीपाणिसरोजमुद्रितमुखो दामोदरः[3] पातु वः ॥२॥

स्वामिन् वासो ममेतन्नहि नहि विदि······रमेमः सवक्रः (?)
स्वर्गङ्गावेदशास्त्रोभुजगपरिवृढः······मने स द्विजिह्वः (?)
स्वीयाङ्गस्पर्शपूर्वन्तदिह भगवतैवोच्यतामित्यकस्मात् (?)
दासप्रत्यर्थिभावः (?) शिवशिवशिवयोः (?) श्रेयसे वः सदाऽस्तु ॥३॥

रक्ताम्बाम्बरमूर्च्छदाक्षदहनज्वालाकुलेन्दुस्रवत्-
पीयूषोब्जसितेऽपसृत्य नदति व्याघ्राजिने वाससि ।
मेघध्वानधियः कुमारशिखिनः सम्फुल्लपिच्छच्छदै-
श्छन्दः प्रीतिमतां लुनातु भवतामाधिज्वरं धूर्जटिः ॥४॥

१—गोवत्सः । २—'कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन' इति सुभाषितभाण्डागार-सुभाषितावल्योः पाठः । ३—गोपीपतिरिति सुभाषितभाण्डागारपाठः ।

लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिर्य्यादसां[1]
कः प्रत्येति जलादपत्यजननं प्रत्येति यः प्रस्तरात् ।
इत्युर्वीधरराजसिन्धुसुतयोराकर्ण्य वाक्चातुरीं
सस्मेरस्य हरेर्हरस्य च दृशो[2] विघ्नं विनिघ्नन्तु वः ॥५॥

सिद्धिरस्तु भवतां कृतोद्यमे मङ्गलानि वितनोतु मङ्गलः ।
रामचन्द्रचरणारविन्दयोः सादरम्भवतु तावकम्मनः ॥६॥

अधुना[3] मधुकरपतिना[4]
गिलितोप्यऽपकारदम्पती[5] येन ।
त्रातः सपालयेत् त्वां
विगतविकारो विनायको लक्ष्म्याः ॥७॥

गौरीक्षणं भूधरजाऽहिनाथः
पत्रं तृतीयं दयितोपवीतम् ।
यस्याम्बरं द्वादशलोचनाख्यः
काष्ठाः सुतः पातु सदाशिवो वः[6] ॥८॥

विषं[7] भुंक्ष्व महाराज
सपुत्रैः सह बान्धवैः ।
विना केन[8] विना नाभ्यां[9]
कृष्णाजीनम[10]कण्टकम् ॥९॥

१—पायसामिति सुभाषितभाण्डागारे उद्भटसागरे च । २—'मुदः' इति उद्भटसागरे । ३—'अ' अपगतो 'धुः' धुकारो यस्मात्तेन । ४—मकरपतिना । ५—पकाररहितो दम्पती । अर्थात् दन्तीति भावः । ६—अस्मिन् पद्ये प्रथमक्षरणो द्वितीयेन तृतीयस्तु चतुर्थेन सह सम्बध्यते । तद्यथा—गौः 'वृषभः' पत्रं 'रथः' यस्य; ईक्षणं 'नेत्रं' तृतीयं यस्य; भूधरजा दयिता यस्य; अहिनाथः 'शेषः' उपवीतं यस्य, अम्बरं काष्ठाः 'दिशः' यस्य; द्वादशलोचनाख्यः 'षडाननः' सुतो यस्य स सदाशिवो वः पात्वित्यन्वयः । ७—विगतः षकारो यस्मात् । ८—ककारेण । ९—नकारद्वयाभ्याम् । १०—कृष्णाजिनशब्दात् 'ककार-षकार-नकारद्वयानां दूरीकरणानन्तरं 'ऋ-आजि-अम्' इति स्थिते सन्धिनियमेन 'राज्यम्' इति आयाति ।

राजन् कमलपत्राक्ष
तत्ते भवतु सर्वदा ।
सम्पादयति यद्रूपं
करेणुः[1] करणैर्विना ॥१०॥

विराजराजपुत्रारेर्यन्नाम चतुरक्षरम्[2] ।
पूर्वार्द्धन्तव शत्रूणां परार्द्धं तव सङ्गरे ॥११॥

## अथ हंसान्योक्तयः

तटमुपगतं पद्मे पद्मे निवेशितमाननम्
प्रतिपुटकिनी पत्रच्छत्रं[3] मुहुर्मुहु[4]रासितम् ।
नयनसलिलैरुष्णैः कोष्णी[5]कृता जलवीचयो
जलदमलिनां हंसेनाशां विलोक्य यियासता ॥१२॥
छित्तपस्य

गाङ्गमम्बु सितमम्बु[6] यामुनं
कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुक्लता
चीयते न च न चापचीयते ॥१३॥
सुरभेः

पीतं येन पुरा पुरन्दरपुरे रम्भोरुकेलिस्खलन्-
मन्दाराङ्कुरकर्णपूरसुरभि स्वर्गापगायाः पयः ।
सोऽयं मारववारि पामरवधूपादार्पणप्रोच्छलत्-
पङ्कातङ्कितभेकभिन्नमघृणो हंसः समाशंसते ॥१४॥

१—करेणुशब्दात् ककार-रेफ-णकारानपनीय यद्रूपं स्वराणां—अ-ए-उः इत्यात्मकानां सन्धौ कृते भवति तत्-'आयुः'—ते भवत्वित्यर्थः । २—वयः पक्षिणस्तेषां राजा गरुडस्तस्य राजा विष्णुस्तस्य पुत्रो प्रद्युम्नापरनामको मदनस्तस्यारिर्महादेवस्तस्य यच्चतुरक्षरात्मकं नाम 'मृत्युञ्जयः' तस्य पूर्वार्धं 'मृत्यु'रिति तव शत्रूणां, परार्धं 'जय' इति तत्ते संगरे भवतु । ३—छायमिति सदुक्तिकर्णामृते, पृ० २७० । ४—प्रतिक्षणमिति सदुक्तौ । ५—उष्णीकृता-इति सदुक्तौ । ६—'शुभमम्बु' इति सदुक्तिकर्णामृते ।

क्रुद्धोलूकनखप्रहारविदलत्पक्षा अपि स्वाश्रयं
ये नोज्झन्ति कदम्बपुष्टवपुषस्ते के चिदन्ये द्विजाः ।
ये तु स्वर्गतरङ्गिणीबिसलसच्छेदेन सम्वर्द्धिता
गाङ्गं नीरमपि त्यजन्ति कलुषं ते राजहंसा वयम् ॥१५॥

वातान्दोलितपङ्कजच्युतरजः पुञ्जाङ्गरागोज्ज्वले
यः शृण्वन् कलकूजितं मधुलिहां संजातहर्षः पुरा ।
कान्ताचञ्चुपुटापवर्ज्जितबिसग्रासग्रहोऽप्यक्षमः
सोऽयं संप्रति हंसको मरुगतः कौपं पयो याचते ॥१६॥

पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि येन नीतं[1] वयः ।
स पल्वलजलेऽधुना मिलदनेकमेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥१७॥

पण्डितराजस्य

यः सन्तापमपाकरोति जगतां यश्चोपकारक्षमः
सर्वेषाममृतात्मकेन वपुषा प्रीणाति नेत्राणि यः ।
तस्याप्युन्नतिमम्बुदस्य सहसे यन्न त्वमेतावता
वर्णैरेव परं मराल धवलः कृष्णश्चरित्रैरसि ॥१८॥

भोजदेवस्य

हंसो वेत्ति परागपिञ्जरवपुः कुत्रापि पद्माकरे
प्रेयान्मे बिसकन्दलीकिसलयं भुंक्ते स्वयं निर्वृतः ।
नो जानाति मनस्विनी यदनिशं जम्बालमालोडयन्
शैवालाङ्कुरमप्यऽसौ न लभते हंसो विशीर्णच्छदः ॥१९॥

गतं तद्गाम्भीर्य्यं[1] तटमुपगतं[2] जालिकशतैः
सखे हंसोत्तिष्ठ त्वरितमनुयामोऽद्य[3] सरसः ।

१—यस्य यातमिति सकलसाधारणपाठः । २—तटमपि चितमिति सुभाषितभाण्डागारे । ३—अमुतो गच्छेति सुभाषितभाण्डागारे सदुक्तिकर्णामृते च २७३ पृष्ठे ।

न यावत्पङ्कान्तःकलुषितवपुर्भूरि विलसन्[1]
वकोऽसौ[2] वाचालश्चरणयुगलं मूर्ध्नि कुरुते[3] ॥२०॥
डिम्बोकस्य

छायामाश्रय पुण्डरीकमिलितां मध्ये सरः शीकरं
सानन्दो भव राजहंस भवतः स्यान्नाम पक्षोन्नतिः।
मञ्जीरेण तथापि च ध्वनिरयं निर्णीयते लीलया
योऽस्माकं परिचारिकाचरणयोः खेलाभिरुत्कूजति ॥२१॥
उमापतिधरस्य

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता।
किन्त्वस्य दुग्धजलभेदविधौ समर्थां
वैदग्ध्यकीर्त्तिमपहर्त्तुमसौ समर्थः ॥२२॥

कस्त्वं लोहितलोचनास्यचरणो हंसः कुतो मानसात्
किं तत्रास्ति सुवर्णपङ्कजवनं तोयं सुधासन्निभम्।
मुक्तागर्भितशंखशुक्तिनिवहा वैदूर्य्यरोहाः क्वचित्
शम्बूका[4] अपि सन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥२३॥

न प्राप्ता बिसकन्दली क्वचिदपि स्वच्छं न पीतं पयः
क्वापि क्वापि सरोजिनीवनघनच्छाया न चाऽऽसादिता।
इत्थं मानसतः समागतवता हंसेन लब्धं पुनः
यत्काकैः सविधं समेत्य विविधः कोलाहलं कुर्वते ॥२४॥

१—विरसन्निति सदुक्तौ। २—'वकोट' इति सदुक्तौ, पृ० २७२ शार्ङ्गधरपद्धतौ च, पृ० १२६।

३—श्लोकोऽयं वल्लभदेवेनेत्थं पठितः—

गतं तद्गाम्भीर्यं जलमपि हृतं जालकशतैः
सखे हंसोत्तिष्ठ प्रथममपुतो दग्धसरसः।
स यावत्पङ्काम्भःकलुषितवपुर्भूरि विलप-
न्न काको ···· कुरुते, पृ० ११२।

४—कम्बवः।

रे राजहंस किमिति त्वमिहागतोऽसि
योऽसौ बकः स इह हंस इति प्रसिद्धः ।
तद्गम्यतामनुपदेन पुनः स्वभूमौ
यावद्वदन्ति न बकं खलु मूढलोकाः ॥२५॥

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ।
रमते न मरालस्य मानसं मानसं विना ॥२६॥

कटु रटति निकटवर्त्ती वाचालष्टिट्टिभो यत्र ।
अपसरणमेव शरणं मौनं वा राजहंसस्य ॥२७॥

## अथ सिंहान्योक्तयः

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥२८॥

पण्डितराजस्य

वराहे गोमायौ मृगपरिषदि श्वापदकुले
करिष्यन् कार्पण्यं किमिह महिमानं गमयसि ।
क्षुत्क्षामोऽसितरां यदि प्रियसखे तन्मृत्युमङ्गीकुरु
प्रभ्रस्येन्महिमा न यत्र महतां तज्जीवनं जीवनम्[1] ॥२९॥

धीरध्वनिभिरलन्ते नीरद मे मासिको गर्भः ।
उन्मदवारणबुद्ध्या मध्ये जठरं समुच्छ्वलति ॥३०॥

यूनां येन विभिन्नवारणघटा कुम्भोच्छ्वलन्मौक्तिक-
श्रेणीभिः परिपूरितास्तटभुवो भूमीभृतां कोटिशः ।

१—श्लोकेऽस्मिन् प्रथमद्वितीयचरणौ शिखरिण्यां, तृतीयचतुर्थौ तु शार्दूलविक्रीडिते दृश्येते । अतोऽनुमीयते श्लोकद्वयस्य सम्मिश्रणमत्र । प्रथमचरणद्वयस्यान्यचरणद्वयन्तथाऽन्यचरणद्वयस्याप्यन्यचरणद्वयं कथञ्चित्परिभ्रष्टम् । हस्तलिखितपुस्तकेऽपि ईदृश एव पाठः ।

तस्यैवाद्य निवाससीम्नि कलभाः क्रीडन्ति निःसाध्वसं
पारीन्द्रस्य जरातुरस्य यदहो जीर्णो जिगीषारसः ॥३१॥

मोहनोपाध्यायस्य

एणः क्रीडति शूकरश्च रणति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्गुरुर्द्धावति ।
निःशंकं कपिपोतकस्तरुलतामुन्मोटते लीलया
हंहो सिंह विना त्वयाद्य विपिने ईदृग्दशा वर्तते ॥३२॥

आमुक्तं हृदि मौक्तिकं मृगदृशां भिल्लैरदाप्याददे
लुण्टाकैः करटेव लुण्ठिपिशितं रक्तञ्च नक्तञ्चरैः ।
हे पारीन्द्र करीन्द्रकुम्भदलने भूतो भवानग्रणीः
अन्यत्रैव फलोपधानमखिलं हस्ते यशस्ते परम् ॥३३॥

अस्मिन्नम्भोदवृन्दध्वनिजनितरुषि प्रेक्षमाणेऽन्तरिक्षं
मा काक व्याकुलीभूस्तरुशिरसि शवक्रव्यलेशानशान ।
धत्ते मत्तेभकुम्भव्यतिकरकरजग्रामवज्राग्रजाग्रद्-
ग्रासव्यासक्तमुक्ताधवलितकवलो न स्पृहामत्र सिंहः ॥३४॥

पद्मधरामश्रस्य

न कुर्व्याः प्राखर्व्यं किमपि करिपोत प्रतिभिया
हरीणां हेलेयं यदिह बहुवेलं विहरसि ।
अकस्मादेतेषां दृशि कुटिलकान्तिस्पृशि मनाङ्-
निरथं भाविन्यो मदकरिदरिद्रा वनभुवः ॥ ३५ ॥

वयोभिमानादपमानता चेद्विधीयते फेरुजरत्तरेण ।
हेलाहतानेककरीन्द्रयूनोर्हरीन्द्रसूनोरपि कापि हानिः ॥३६॥

उद्दामद्रुमभङ्गभीमदशनो ये नाभ्यघानि द्विपः
सोऽयं वञ्चकचेष्टितैस्त्यजति किं पञ्चाननः काननम् ।

१—महीपतिमण्डलीकस्येति शार्ङ्गधरपद्धतौ, पृ० १४३ ।

तत्प्रीतिर्न्न कृतिस्समं न समरं क्षान्तिर्मनोग्लानये
श्रेयानित्ययमस्य माननिधिनो यत्काननोपक्रमः ॥३७॥

एतस्मिन् विपिने मया बलवता नाज्ञापिताः के मृगाः
कस्मै वा न फलं विकीर्णमुचितं रोषस्य तोषस्य च ।
सोऽहं मूषकमद्य बन्धनगुणच्छेदार्थमभ्यर्थये
नास्थांसोऽपि करोति दग्धहृदयं द्वेधा न किं भिद्यसे ॥३८॥

मोहनोपाध्यायस्य

हे पारीन्द्र करीन्द्रयूथमथन प्राप्तप्रकर्षं यशो
नाशोच्यानिह नाशयन्मृगशिशून् मालिन्यमापादय ।
क्षुत्क्षामोऽसितरां यदि प्रियसखे तन्मृत्युमङ्गीकुरु
प्रभ्रश्येन्महिमा न यत्र महतां तज्जीवनं जीवनम् ॥३९॥

गम्यते यदि मृगेन्द्रमन्दिरं
लभ्यते च गजकुम्भमौक्तिकम् ।
कुक्कुटालयगतेन लभ्यते
वत्सपुच्छखुरचर्म केवलम् ॥४०॥

जातः स्तन्यं न जग्राह कण्ठीरवकिशोरकः ।
चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥४१॥

वागुराशतबद्धोऽपि विद्धोपि हरिशावकः ।
मुग्धव्याधवधूवक्षो लोहिताक्षो निरीक्षते ॥४२॥

वितरीतुमर्थमभिमानशालिनः
पुरुषस्य नैव सदसद्विवेचनम् ।
विकिरत्यरण्यविषयेषु मौक्तिकं
गजराजगण्डदलनो मृगाधिपः ॥४३॥

स्वल्पस्नायुवसावशेषमलिनां निर्म्मांसमप्यस्थि गोः
श्वालब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये ।

सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्व्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥४४॥

समरं समरं हसावरं (?) लघुभिः संगतमप्यसङ्गतम् ।
इति मौनमुपैति केसरी सरसा स्नुनुरतिप्रगल्भते ॥४५॥

रे दन्तावल सन्ति पर्व्वतसरो वापीनिवेशात्परे
देशान्तेषु निनादभूधरधराकल्पादिसम्पाद्यताम् ।
प्रौढिं नाचर मन्दरे यदधुना तत्कन्दरावर्त्तिना
पारीन्द्रेण वसुन्धरा भगवती निःसिन्धुरासेत्स्यते ॥४६॥

## अथ गजान्योक्तयः

वराहे गोमायौ मृगपरिषदि श्वापदकुले
करिष्यन् कार्पण्यं किमिह महिमानं गमयसि ।
निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिपदशा-
मभद्रं भद्रं वा विधिलिखितमुन्मूलयतु कः ॥४७॥

धैर्यं धेहि पराक्रमं कुरु सखे गन्तासि दन्तावल
स्वस्यैव क्षमता सखे रचयति क्षेमानि यन्मानिनाम् ।
चिन्तां केन करोषि चेतसि चिरं लग्नोऽसि पङ्केऽपि चेत्
किं नीचेषु वनेचरेषु चरसि त्वं याचनं केषु चित् ॥४८॥

शैत्यं नाम गुणास्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचयो भवन्ति शुचिता स्पर्शेन यस्यापरे ।
किञ्चातः परमं तव स्तुतिपदं यज्जीविनां जीवनं
त्वञ्चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥४९॥
भवनाथमिश्रस्य[1]

तापो नापगतस्तृषा न च कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।

१—केयटस्येति सदुक्तिकर्णामृते, पृ० २९६ ।

दूरान्मुक्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झंकारकोलाहलः ॥५०॥

शङ्करमिश्रस्य[1]

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिकरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने वसन्ति ॥५१॥

गजस्य पङ्कलग्नस्य अपाकरमिदं महत् ।
पारमुत्प्लुत्य यद्गत्वा हरिणोऽपि हसत्यसौ ॥५२॥

एणश्रेणी शशकनिकरः शल्लकीनाङ्कदम्बं
काकव्यूहः स्पृशति सुखितां यत्र तत्रापि कुञ्जे ।
को नामास्मिन् बत हतवने पादपस्तादृगुच्चैः
यस्य च्छायामयमधिवसत्युष्मरुग्णो गजेन्द्रः ॥५३॥

कमलं कवलीकृतञ्च वा
सलिलं वा न सलीलमाहृतम् ।
करिणा परिणामदारुणो
ददृशे विन्ध्यवने मृगाधिपः ॥५४॥

नो मन्ये दृढबन्धनात् क्षतमिदं नैवाङ्कुशोद्भेदनात्[2]
स्कन्धारोहणताडनात्परिभवं नैवान्यदेशागमात्[3] ।
चिन्तां ये जनयन्ति चेतसि परं स्मृत्वा च यूथं वने
सिंहत्रासितभीतिभीरुकलभा यास्यन्ति कस्याश्रयम् ॥५५॥

पाम्पाकस्य

चिन्तामिमां वहसि किं गजयूथनाथ
योगीव योगवशमीलितनेत्रपद्मम् ।

---

१—आचार्य-गोपीकस्येति सदुक्तिकर्णामृते, पृ० १५२-५३ । २—नैवाङ्कुशोद्घाटनमिति सदुक्तिकर्णामृते, पृ० २५६ । ३—नैवान्यदेशागममिति सदुक्तौ ।

पिण्डं गृहाण पिब वारि यथोपनीतं
दैवाद्भवन्ति विपदः खलु सम्पदो वा ॥५६॥

मध्ये विन्ध्यवनं सलीलवसतिः स्वच्छन्दमुत्पद्मिनी-
कन्दैर्यस्य सदाशितं रतविधिः[1] क्रीडाकरिण्यः शतम् ।
तल्पं शैवलनीदलानि मिलितं दैवान्मरूणां तटे
जिह्मस्ताम्यति संस्मरन्ननुदिनं विन्ध्यं स गन्धद्विपः ॥५७॥

अमरसिंहस्य

करिन्मा गर्जोच्चैर्मृगपतिरिहास्तेऽति[2] निकटे
न दृष्टस्त्वं दूराद्[3]पसर सुदूरं द्रुतमितः ।
न किं पश्यस्यग्रे नव[4]नखरनिर्दारितकरि-
प्रकीर्णासृक्[5]श्रेणीशबलित[6]मद्भुं शैलकटकम् ॥५८॥

संग्रामचन्द्रस्य

गले पाशस्तीव्रश्चरणयुगयुग्मे च निगडो
दृढः कक्षाबद्धः शिरसि सृणिघातः खरतरः ।
नरः स्कन्धारूढो बत मरण[7]योग्येऽपि समये
न जानीमो मूढ द्विरदवर कस्मात्तव मदः ॥५९॥

नन्नदत्तस्य

रे रेवातटकेलिलम्पटवपुः शोकं वृथा मा कृथाः
कुम्भिन्कुम्भसमाहृतं पिब पयो बन्ध्यैव विन्ध्यस्मृतिः ।
ताभिः काननकुञ्जरीभिरधुना दैवेन दूरीकृतो
वेल्लत्पल्लवशल्लकीवनलताकुञ्जेषु ते विभ्रमः ॥६०॥

कह्लणस्य

दूरादेव करञ्जसर्जसरलप्रायान्विलोक्य द्रुमान्
क्षुत्क्षामो विकलः करी क्षितभृतः पादान्तिके प्रस्थितः ।

---

१—भवविधिरिति सदुक्तौ, पृ० २५३ । २—अस्येति सदुक्तौ, पृ० २५१ ३—दैवादिति सदुक्तौ । ४—खरेति सदुक्तौ । ५—अस्थीति पाठान्तरम् । ६—धवलितमिति सदुक्तौ । ७—रमणेति सदुक्तौ पृ० २५४ ।

मोहादागत एव निर्झरदरीदुर्गे निरालम्बनो
निर्म्मग्नः किमयं करोतु भगवान् यस्य प्रतीपो विधिः ॥६१॥

ग्राम्यामग्रे करेणुं स्वयमुपनयता येन बद्धोऽसि पाशै-
र्य्येन क्षुण्णं शिरस्ते सृणिभिरमसृणैर्य्येन वज्र्यः[1] कृतोऽसि ।
तत्पादाङ्गुष्ठसंज्ञापरवशहृदयो द्रष्टुकामानमन्तून्
जन्तूनभ्येषि हन्तुं त्वमसि गजपते सत्यमेको मदान्धः ॥६२॥
उमापतिधरस्य

त्यक्तो विन्ध्यगिरिः पिता भगवती माता च रेवा नदी
ते ते दुर्गमभूनिसर्गसुहृदो विन्ध्याटवीपादपाः[2] ।
त्वल्लोभादनु दन्तिनि स्वयमितो बन्धाय दत्तं वपु-
स्त्वं दूरे ध्रियसे लुठन्ति च शिरःपीठे कुठारा[3]ङ्कुशाः ॥६३॥
भर्तृमेण्ठस्य

वैरिभ्यः परिपालयन् वनभुवं स्वं यूथमाश्वासयन्
विश्रम्भच्युतिशङ्कया सहचरानालापयन् कुञ्जरान् ।
अन्तर्व्यूढवहिर्निगूढकरिणीविश्लेषदुःखातुरो
यद्यद्यूथपतिर्व्यथां विषहते धिक् तस्य वेत्तापि कः ॥६४॥

करशीकरशीतलं वितन्वन्
वनभूभागमुदग्रदावदग्धम् ।
पुरतोऽव्रति चेन्न यूथनाथः
कलभानां सुलभस्तदा न पन्थाः ॥६५॥
पीताम्बरमल्लिकस्य

लता न तादृक् सविधे न वृक्षा
गजा न जानन्ति समानकक्षाः ।
करावलम्बाय करोतु कम्बा
जम्बालजाले पतितः करीन्द्रः ॥६६॥

१—'बाह्य' 'इति सदुक्तौ, पृ० २५४ । २—ते ते स्नेहनिबन्धबन्धुरधियस्तुल्योदया दन्तिनः' इति सदुक्तिकर्णामृते, पृष्ठ २५६ । ३—कठोरेति सदुक्तौ, पृ० २५५।

त्वमप्यस्तव्यस्तो यदि भवसि अम्बालजमित-
स्तृणस्तम्बे स्तम्बेरम किमवलम्बं न भजसे ।
विमुञ्च द्राक् चिन्तामथ खलु समन्तान्मदभ्कर-
प्रपातैर्निष्पङ्कं किमिह सरिदङ्कं न कुरुषे ॥६७॥

## अथ चातकान्योक्तयः

चातकेन तृषार्त्तेन
यत्पीतं क्षारमम्बुधौ ।
तदेव हि दहत्यन्तः
पुनः पानस्य का कथा ॥६८॥

धाराधर धरामूलं धाराभिरभिषिञ्चसि ।
खगचञ्चुपुटद्रोणीपूरणे कतमः श्रमः ॥६९॥

मा देहि देहि मयि वारिद वारिधारा-
स्ता वा पतन्तु वदनेषु न वा पतन्तु ।
त्वत्तोऽन्यतो यदि पुनर्विवृणोति वक्त्रं
मूर्द्धा द्विधा भवतु चातकपोतकस्य ॥७०॥

हे वारिद व्यवसितङ्कति वासराणि
नाद्यापि शाम्यति तृषा मम चातकस्य ।
दूरे तवास्तु जगतामुपकारि वारि
मा गर्ज वज्रपतनादधिकं बिभेमि ॥७१॥

पाथोधिर्यदि निर्झरा यदि पयः पूर्णास्तडागा यदि
स्वादुस्वच्छगभीरनीरसुलभा गङ्गादिनद्यो यदि ।
त्वामम्भोद तथापि चातकशिशुर्य्यत्नात्पयो याचते
सर्वाशापरिपूरणाय विधिना सृष्टस्त्वमेकः परम् ॥७२॥

ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् ।
अत्यूर्जितं गर्ज्जितमात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरे

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः ।
केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥७४॥

पण्डितराजस्य

अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नन्ति ये
भ्रातश्चातक किं वृथा विरुदितैः[1] खिन्नोऽसि विश्रम्यताम् ।
मेघः शारद एष काशधवलः पानीयरिक्तोदरो
गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युज्झति ॥७५॥

तावत्सर्वगुणाश्रयः पटुमतिः साधुः सतां वल्लभः
शूरः सच्चरितः कलङ्करहितः कृत्यः[2] कृतिज्ञः कविः ।
दक्षो धर्म्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठान्वितो
यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥७६॥

तृषार्त्तैः सारङ्गैरधि[3]जलधरं भूरि विरुतं
घनैर्मुक्ता धाराः सपदि पयसस्तान् प्रति मुहुः ।
खगानां के मेघाः क इह विहगा वा जलमुचा-
मयाच्यो नार्त्तानामनुपकरणीयो न महताम् ॥७७॥

भर्त्तृहरेः

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिखिन्नो[4]त्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन[5] ॥७८॥

वातैर्विशोषय विभीषय भीमनादैः
सञ्चूर्णय त्वमथ वा करकानिपातैः ।

१—वृथात्र रटितैरिति पाठान्तरम् । २—मानीति पाठान्तरम् । ३—प्रतिजलधरमिति पाठान्तरम् । ४—'निविष्ट' इति सदुक्तौ, पृ० २७०; निषण्ण इति च पाठान्तरम् । ५—अचलसिंहस्येति सदुक्तौ ।

त्वद्वारिबिन्दुपरिपालितजीवितस्य
नान्यागतिर्भवति वारिद चातकस्य ॥७९॥

दृष्ट्वा तोयभरावनम्रनिविडप्रारम्भमम्भोधरं
तृष्णार्त्तः किल रौति यावदसकृत् तोयाशया चातकः ।
तावच्चञ्चलचञ्चुकोटरकुटीकोष्ठे लुठन्तः स्फुटं
दृश्यन्ते करकोत्कराः किमपरं कोऽप्येष वामो विधिः ॥८०॥

शरणस्य

अपि चातकचञ्चुपुटात्स्खलति जलदोदविन्दुरनिला[1]च्चेत् ।
द्विज एव भाग्यहीनो जीवनदाता कृती जलदः ॥८१॥[2]

यस्योदकं[3] बहुमनोरथमन्तरेण
सञ्चिन्तितं किमपि चेतसि चातकेन ।
हा कष्टमिष्टफलदानविधानहेतो-
रम्भोधरात्पतति सम्प्रति वज्रपातः[4] ॥८२॥

सिन्धावेव[5] कियज्जलं कलशभूर्यत्पाणिपात्रे दधौ
तत्पीतं कियदम्बुदैः कियदितो वान्तं कियत्सञ्चितम्[6] ।
तत्पातुं व्यवसायदीनमनसो धावन्त्यमी सम्भ्रमा-
दावर्त्तैर्म्मरुतां तदप्यपहृतं धिक् चातकं[7] धिग्विधिम् ॥८३॥

लक्ष्मीधरस्य

विष्वक्प्लावयता जगन्ति जलद प्रीतस्त्वया वारिभिः
सारङ्गोऽपि तदा प्रसङ्गपतितः केयं विशेषज्ञता ।
सानन्दास्तुमहे चिराय चरितं तस्यैव येन त्वयि
क्षीणोऽपि क्वचिदेव नाम्भसि मनागारोपि चञ्चूपुटः ॥८४॥

जलचन्द्रस्य

---

१—अनिलश्चेति सदुक्तौ । २—शब्दार्णवस्येति सदुक्तौ, पृ० २७१ । ३—'अस्योदरे' इति सदुक्तौ । ४—लडहचन्द्रस्येति सदुक्तौ, पृ० २७१ । ५—सिन्धोरेवेति सदुक्तौ, पृ० २७१ । ६—वा स्थितमिति सदुक्तौ । ७—चातकानिति सदुक्तौ ।

गङ्गा शम्भुशिरोजलं जलनिधिर्देवस्य लक्ष्मीपतेः
शय्याक्षालनवारि वारि सरसः क्लीवः[1] सनिन्द्यः सताम् ।
नद्यस्ताः शतशोऽस्य[2] योषित इति त्यक्तोपभोगो युवा
सारङ्गः सहसोन्नतेन[3] शिरसा धाराधरं याचते ॥८५॥

एक एव खगो मानी सुखं जीवति चातकः ।
अर्थित्वं याति शक्रस्य न नीचमुपसर्प्पति ॥८६॥

यावत्तिष्ठति चातकोऽयमसुभिः प्राणस्थिति[4]स्थायिभि-
स्तावद्देहि पयः पयोद फलद[5] त्वद्वारिदानद्रुमः[6] ।
नो चेदस्य तृषार्त्तपीडिततनोः प्राणैः प्रयाणे कृते
कस्मै दास्यसि को ग्रहीष्यति मनस्तापे कृते ताम्यसि ॥८७॥

नीहाराकरसारसागरसरित्कासारवारिश्रियः
त्यक्त्वा वारिद चातकेन भवतः सेवा समालम्बिता ।
तस्यैतत् फलितं यदुन्नत[7]शिलासन्ताडनं मस्तके
गाढं गर्ज्जसि वज्रमुज्झसि तडिल्लेखाभिरातर्ज्जसि ॥८८॥

यन्मूर्द्धानमशिक्षितो नमयितुं निम्नेषु तेनोच्चकै-
रारूढं[8] पदमादरेण जलद त्वां याचते चातकः ।
यद्यस्मै विमुखो भवानपि पयोधारास्तुवीतुं[9] ततः
पक्ष्मारोपितचञ्चुरेष जरयत्वङ्गे पिपासारसम् ॥८८॥अ

वदत विदितजम्बूद्वीपसद्वृत्तवार्त्ताः
क्वचिदपि यदि दृष्टं वारिवाहं विहाय ।
सरिति सरसि सिन्धौ चातकेनार्पितोऽसा-
वतिबहलपिपासापांशुलः कण्ठनालः ॥८९॥

---

१—क्लीवस्य निन्द्य' इति सदुक्तौ, पृ० २७२। २—अन्यैति सदुक्तौ। ३—सततोन्नतेनेति सदुक्तौ। ४—कण्ठस्थलेति सदुक्तौ। ५—फलतु इति सदुक्तौ। ६—कल्पद्रुमः इति सदुक्तौ। ७—उद्धतेति सदुक्तौ, पृ० २७२। ८—'आरूढः' इति सदुक्तौ, पृ० २७२। ९—'करीतुं' इति सदुक्तौ।

तृषार्त्तां शोचन्तीं न गणयति दीनां गृहवतीं
न दीनः पक्ष्मभ्यां स्थगयति शिशुं नालपति च[1] ।
कुटुम्बी सारङ्गः प्रसरति निदाघेऽप्यविकलः
कुलस्य स्वस्यायं न खलु पदमन्यः[2] श्लथयति[3] ॥६०॥

अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णातुरा
वापीकूपतडागसागरसरित्तोयेषु मज्जन्ति ये[4] ।
मामद्यापि न वेत्सि चातकशिशुं यः कण्ठशुष्कोपि सन्
नान्यं पश्यति नोपसर्प्पति न च प्रस्तौति न ध्यायति ॥६१॥

शुष्यत्कण्ठ[5]मुदञ्चितेक्षणयुगं पर्यस्तपक्षद्वयं
व्यातुत्रोटिबहिर्विसारि नयनं त्वां याचते चातकः ।
तोयं मुञ्च न मुञ्च वा जलधर त्वामेव देवार्थये
स्वं कायं हिमरोचिरङ्कसदृशच्छायं क्षणं दर्शय ॥६२॥

स्वच्छाः सौम्यजलाशयाः प्रतिदिशं ते सन्तु मा सन्तु वा
प्राणान् हन्तु बहिस्तृषाकुलतया निर्य्यान्तु मा यान्तु वा ।
स्तोकं वा बहु वा जलं जलधर त्वं देहि मा देहि वा
प्रत्याशा पुनरस्य चातकशिशोस्त्वय्येव विश्राम्यति ॥६३॥

पाथोनिधिमधिपाथो वितरसि पाथोद किं तेन ।
दिनकरकराभितप्तं चातकपोतञ्च तोषयसि ॥६४॥

गर्जितबधिरीकृतजगता किमपि कृतं न घनेन ।
इयती चातकचञ्चुपुटी साऽपि भृता न जलेन ॥६५॥

किन्नैव सन्ति भुवि तामरसावतंसा
हंसावलीवलयिनो जलसन्निवेशाः ।

---

१—शिशूनालपति वेति सदुक्तौ, पृ० २७३ । २—पथि न पदमल्पमिति सदुक्तौ । ३—गोसोकस्येति सदुक्तौ । ४—मज्जन्ति दत्तादराः इति भाण्डागारे । ५—शुष्यत्कण्ठेति खपुस्तकपाठः ।

को दुर्ग्रहो ग्रहवतः खलु चातकस्य
पौरन्दरीं यदभिवाञ्छति वारिधाराम् ॥९६॥

चौरकवेः

भ्रातश्चातक नीत एव बहुलः कालः कठोरस्त्वया
द्वित्राण्येव दिनानि सन्ति विपदो मानच्युतिं मा कृथाः ।
भूयः कातरनेत्रपालिसरसस्तीरं किमुद्वीक्ष्यसे
लाभश्चञ्चुपुटप्रमाणमुदकं दीर्घं कुले दुर्यशः ॥ ९७ ॥

धारासारैर्हि धाराधर तव तरवो नूतनोत्पन्नपर्णाः
पूर्णा नद्योपि सद्यो दिशि दिशि निखिलोल्लासभूरासभूमिः ।
भूयो भूयोऽपि काकुं कलयति विवृते त्रोटिरुद्ग्रीवकायं
नायं प्राप्नोति पाथोलवमकरुणता तातके चातकेयम् ॥ ९८ ॥

हरिहरोपाध्यायस्य

नीरनिधेरपि नीचान्नाचामति चातकः प्रचुरमम्भः ।
अपि शीकरमुत्कन्धरमुन्नतमम्भोदमर्थयति ॥ ९९ ॥

तस्यैव

प्रायः प्रावृषिमखिलं तवाधिकारः परोपकारस्य ।
परिहर पयोद चातकयाचनवैमुख्यपातकप्रणयम् ॥१००॥

तस्यैव

मा धावता तव चातक वारिमुचान्तारतम्येन ।
सम्मिलतु जलकोटिस्त्रोटिपुटीपूरमेव तोयन्ते ॥१०१॥

## अथ कोकिलान्योक्तयः

अम्भोजप्रकरोऽथ केतकफुलं कुन्दोत्करः कैरव-
व्रातो मल्लिगणोऽथ चम्पकचयो जातीगणो वाऽथवा ॥

नो चेदादरमातनोति पिक तत्[1] खेदं वृथा मा कृथा
यस्मात् क्वापि कदाऽपि कोऽपि भविता यस्त्वद्गुणं ज्ञास्यति ॥१०२॥

येनोषितं रुचिरपल्लवमञ्जरीषु
श्रीखण्डमण्डित[2] रसालवने सदैव ।
दैवात्स कोकिलयुवा निपपात निम्बे
तत्रापि रुष्टबलिपुष्टकुलैर्विवादः ॥१०३॥

येनानन्दमये वसन्तसमये सौरभ्यहेलामिल-
द्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः ।
आः कालस्य[3] वशे तु[4] कोकिलयुवा सोऽप्यद्य सर्व्वा दिशो
भ्राम्य[5]द्वायसचञ्चुघातविदलन् मूर्धा मुहुर्धावति ॥१०४॥
भेरीभाङ्कारस्य

भ्रातः कोकिल कूजितेन विमलं[6] नानन्दमापूरय-[7]
स्तूष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः क्वचित्कोटरे ।
प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलः
कालोऽयं शिशिरस्य सम्प्रति सखे नायं वसन्तोत्सवः ॥१०५॥

कोकिल मा भज मौनमिदानीं
किञ्चिदुदञ्चय पञ्चमरागम् ।
नो चेत्त्वामिह को जानीते
काककदम्बविनिहिते चूते ॥१०६॥

पिकः कृष्णो नित्यं परमरुणया पश्यति दृशा
परापत्यद्वेषी स्वसुतमपि नो पालयति यः ।
तथाऽप्येषोऽमीषां सकलजगतां वल्लभतमो
न दोषा गण्यन्ते मधुरवचसः केनचिदपि[8] ॥१०७॥

१—'ते' इति भाण्डागारे, पृ० २३६ । २—मण्डलेति भाण्डागारे, पृ० २३६ । ३—आहस्त्रस्येति स्वपुस्तकपाठः । ४—वशेनेति भाण्डागारे, पृ० २३६ । ५—खेलदिति भाण्डागारे, पृ० २३६ । ६—किमलमिति भाण्डागारे, पृ० २३६ । ७— नाद्यापूयनर्घ्यो गुणः' इति भाण्डागारे । ७—खलु मधुरवाचां क्वचिदपीति भाण्डागारपाठः, पृ० ८९ ।

दात्यूहाः सरसं रसन्तु सुभगं गायन्तु केकाभृतः
कादम्बाः कलमालपन्तु मधुरं कूजन्तु कोयष्टयः ।
दैवाद्यावदसौ रसालविटपिच्छायामनासादयन्
निर्विण्णः कुटजेषु कोकिलयुवा सञ्जातमौनव्रतः ॥१०८॥
रामदासस्य

तावच्चकोरचरणायुधचक्रवाक-
पारावतादिविहगाः कलमालपन्तु ।
यावद्वसन्तरजनीघटिकावसान-
मासाद्य कोकिलयुवा न कुहूङ्करोति ॥१०९॥

## अथ भ्रमरान्योक्तयः

श्रीमन्तोऽप्यखिलानुरञ्जनकलावन्तोपि कालक्रमा-
द्वक्रे धातरि कातरेण मनसा के वा न किं कुर्व्वते ।
यद्वृन्दारकवन्द्यमानसुरभिन्मन्दारमालामधु-
च्चोदच्चादितजिह्वया मधुकरः प्रस्तौति धूस्स्थूरकम् ॥११०॥

पीतं येन सरोजभाजनगतं काम्यं मधु स्वेच्छया
भुक्ता येन लवङ्गवल्लिलहरी[1] सोल्लासलीलावती ।
येनालिङ्गि मनोहरा रसवती संभाषिता मालती
सोऽयं देवविघट्टितो मधुकरः शाखोटकं सेवते ॥१११॥

यास्यामि मेरुशिखरं पुनरेव तत्र
पास्यामि कल्पलतिकाकुसुमे मधूनि ।
केनापि नन्दनवनच्युतषट्पदेन
जन्मैव यापितमनेन दुराग्रहेण ॥११२॥

जातीं जातु स्पृशति न मनाक् केतकीं नोपयाति
प्रायो यूथीं व्रजति न तवाधाय चित्ते मरन्दम् ।

१—भुक्ता येन पुनर्लवङ्गलतिकेति खपुस्तकपाठः ।

पद्म त्वञ्चेत्सपदि मुकुलीभावमन्वेषि मानी
नो जानीमः किमिह भविता संभृताशो मिलिन्दः ॥११३॥

पञ्चषाणि दिवसानि भृङ्ग मा घातकी पतनपातकी भव ।
अनुरुल्लसितबालपल्लवा मालती मुकुलितेव लक्ष्यति ॥११४॥

अन्यासु तासु मधुपमर्दसहासु[1] भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
बाला[2]मजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किन्नवमल्लिकायाः ॥११५॥

विद्यापतेः[3]

गत्वा कैरविणीमुपेत्य नलिनीमासाद्य मल्लीलता-
मालिङ्ग्याभिमतां लवङ्गलतिकां भृङ्गोऽधुना जीवतु ।
मालत्यातितथानुरञ्जितमभूदेतस्य चेतः पुरा
यावज्जीवमसौ न मुञ्चति पुनः कुत्रापि तस्याः स्मृतिम् ॥११६॥

एकद्वैर्म्मधुविन्दुभिर्म्मधुलिहः स्य देव कुक्षिम्भरिः
कस्मिन् वा कुसुमे भवन्ति सुलभा तेऽमी पुनः पञ्चषाः ।
कालः कोऽपि स तादृशः परिणतो येनैकतृष्णाकुलो
यद्यत्पुष्पमुपागमत्कृपणवत्तेनास्य माकुञ्चितम् ॥११७॥

प्रतिदिवसमनैषीः पद्मिनीसद्मनि त्वं
रजनिषु निरतो भूः कैरविण्यां रमण्याम् ।
कथय कथय भृङ्ग स्वच्छभावेन तावत्
सुखमधिकमवाप्तं तत्र वा तत्र वेति ॥११८॥

क्षुद्रोच्छिष्टैः सहजमलिनैर्नीरसैरुग्रगन्धै-
रुद्यद्दर्वा रमय कुसुमैर्व्वर्व्वरे वर्व्वणाद्याः ।

१—मुग्धामिति सदुक्तौ भाण्डागारे च । २—'तावदुपमर्दसहासु' इति सदुक्तौ भाण्डागारे च । ३—'विकटनितम्बायाः' इति भाण्डागारे ।

मल्लीमालागलदविरलस्वादुमाध्वीकधारा-
साराकर्षी त्वयि न कुरुते दृष्टिपातं द्विरेफः ॥११६॥

प्रतिलताविटपं कुसुमाकरे
पिबतु वै मकरन्दमियं मुहुः ।
तदपि नित्यमहो मधुपावलिः
स्पृहयति प्रसभं सरसीरुहे ॥१२०॥

सेव्यं विहाय कमलाकरमार्त्तिनाशं
यत्केतकीसुमनसं प्रति भावितोऽसि ।
तस्यानयस्य फलमतदुपागतन्त
किङ्कुर्वसि भ्रमरकण्टकभग्नपक्षः ॥१२१॥

भ्रमन् वनान्ते नवमञ्जरीषु
न षट्पदो गन्धफली[1]मजिघ्रत् ।
सा किन्न रम्या स च किन्न रन्ता
बलीयसी केवलमीश्वरेच्छा ॥१२२॥

लक्ष्मीदेव्याः

इह परिमलो यत्र व्यक्तो न तत्र मधुश्रियो
मधुसमधिकं यस्मिन् तस्मिन्न गन्धसमृद्धयः ।
इति समधिकं निन्दन् कुन्दोदरे स कुतूहलः
कमलमुभयोः पात्रं स्मृत्वा निषीदति षट्पदः ॥१२३॥

त्यक्त्वा त्वं मकरन्दमेदुरममुं मन्दारनिन्दाकरं
चूतं नूतनकेतकीमनुसरन् यत्कण्टकैः कीलितः ।
उद्भ्रान्तस्य मलीमसस्य मुखरस्योन्मत्तचित्तस्य ते
रे रे चञ्चलचञ्चरीक तदिदं कर्मानुरूपं फलम् ॥१२४॥

त्यक्त्वारविन्दविपिने मकरन्दपानं
हित्वा तथा कुमुदिनीवनसन्निधानम् ।

१—चम्पककलिकामित्यर्थः

अभ्यागतो मधुकरः परमाभिमानी
हे चम्पकद्रुम मनागनुकल्पनीयः ॥१२५॥

भवतीं हृदये विनिधाय चिरादिवाः (व ताः ?) परिधाय लता ललिता
भवदीयममन्दममन्दरसं सरसम्परिपातुमलिः कमिता ।
सन्निधे तव सम्प्रति तेन कथं कथमप्यथवा दिवसा गमिता
यदि नैव विकाशमुरीकुरुषे वद मालति काऽस्य गतिर्भविता[1] ॥१२६॥

धीरेन्द्रोपाध्यायस्य

येनास्वादि पुरा सुराधिपपुरे कल्पद्रुमाणां मधु
स्वल्पेनापि कदम्बकुन्दकुमुदामोदोऽपि नादायि च ।
इत्थं दैववशाद्दशामुपगतो दीनामिदानीमलि-
स्त्वेरण्डद्रुमकानने कृशतनुर्वृत्तिं समाशंसते ॥१२७॥

स्थातव्यं नवपल्लवे मधु मया पेयं प्रसूनोदरे
कार्य्यं कोमलमञ्जरीपरिसरे[2] हिन्दोलिकान्दोलनम् ।
इत्याशाशतमांशलेन मनसा त्वामेव देवद्रुम
ध्यायन्ध्यायमहर्निशं मधुकरो न क्वापि विश्राम्यति ॥१२८॥

वसन्तमिश्रस्य

सौरभ्यमभ्यधिकमेव जगत्प्रसिद्धि-
मुच्चैः पदस्थितिरुदारतरा च कान्तिः ।
स्वल्पोऽपि चम्पकतरोः कुसुमे रसश्चे-
दन्यत्र किं पदमपि प्रचलन्ति भृङ्गाः ॥१२९॥

माधविकामधुरसिकं कमलिनीकेलिदुर्ल्ललितम् ।
कुमुदिनि किमाकलयसि दैवादभ्यागतं मधुपम् ॥१३०॥

१—कपुस्तके श्लोकोऽयं नास्ति । २—'परिकरे' इति कपुस्तकपाठः ।

माधविकामाणेशः प्राघुणिकस्ते घुणाक्षरन्यायात् ।
यूथिपथोचितविधिना विधेयमातिथ्यमेतस्य ॥१३१॥

न कुन्दलतिके मन्दमादरं मधुपे कुरु ।
लवङ्गीप्राणनाथोऽयं न त्वया परिचोयते ॥१३२॥

स्फीताः स्फुरन्ति लतिकाः कति काननेषु
सौरभ्यसारगुरवस्तरवो जयन्ति ।
मैरन्दवृन्दमधुना मधुना निजेन
मां कुन्दतुन्दिलययंस्त्वमिव त्वमेव ॥१३३॥

हे मल्लि हे मालति हे लवङ्गि
न तादृशी कापि भवादृशीनाम् ।
त्वणं समाधाय मधुव्रतं या
विस्मारयत्यम्बुजनीवियोगम् ॥१३४॥

न कुन्दे मा कन्दे निवसति न वा चम्पकचये
मनो दत्ते धत्ते कथमपि न चित्ते कुरवकम् ।
सरोजाते याते शिव शिव हिमानीमलिनतां
मनस्वी रोलम्बो दिनमनवलम्बो गमयति ॥१३५॥

गन्धाढ्यासौ जगति विदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात ।
अन्धीभूतः कुसुमरजसा कण्टकैः क्षुण्ण[1]पक्षः
स्थातुं गन्तुं द्वयमपि सखे नैव शक्तो द्विरेफः ॥१३६॥

अयि किं गुणवति मालति जीवति भवतीं विना मधुपः ।
अथ यदि जीवति जीवतु जीवनमपि जीवनाभासः ॥१३७॥

१—छिन्नेति कपुस्तकपाठः ।

यदङ्के निश्शंकं निशि मधुकरैः केलिरकलि
प्रभाते तां हित्वा विपदि पतितां कैरववनीम् ।
त एते कांचन्ते सपदि नलिनीं कुक्कुटकुला-
न्यतो वैराग्यादाददति क-क-रे-के[1] इति गिरः ॥१३८॥

अयि पतङ्गि लवङ्गलतावने पिब मधूनि विधूय मधुव्रतान् ।
इह वने च वनेचरसंकुले न सतामसताश्च निरूपणम् ॥१३९॥

येनालिङ्गि लवङ्गिका नहि नवा मल्ली समाह्लादिता
मालत्या मुकुलेन वाकलि पदं त्यक्त्वाऽथवा जातकी ।
सोऽयं हन्त मधुव्रतो विधिवशात्प्राप्तो विदेशान्तरं
निर्गन्धे कुटजे कथं कथय रे जह्यान्मनस्विव्रतम् ॥१४०॥

मल्लित्वं बहुवल्लभासि नलिनि त्वं दुर्लभा भूतले
यूथि त्वञ्च यथोचितासि करणे विज्ञेषु न ज्ञायसे ।
सा काचिल्लतिका यदीयविकचत्पुष्पेषु पुष्पन्धयः
पायं पायमयं मधूनि रमते मूर्द्धानमान्दोलयन् ॥१४१॥

क्षणं तस्थौ कुन्दे पथिक इव यूथीमुपगतो
बहिर्बद्धप्रेमा स्पृशति कुतुकी केतकमपि ।
वसन्ते वासन्तीमभिसरति नालिङ्गति पुनः
प्रियाया मालत्याश्चिरविरहखिन्नो मधुकरः ॥१४२॥

उपाध्यायपदाङ्कितपञ्जीकारस्य

नीतास्ते वै शिशिरदिवसा दुर्ल्लभान्यप्रसूनाः
कुन्दे यस्मिन् भ्रमर भवता किञ्च पुष्टा तनुश्रीः ।
सोऽयं लब्ध्वा बहुमधु मधौ चक्षुषा नेक्ष्यते चेत्
संसारेऽस्मिन् शिव शिव तदा विश्वसेत्को रसज्ञे ॥१४३॥

---

१—श्लिष्टेयं ध्वनिः । मैथिलीभाषायां 'ककरे के' इत्यस्य 'कस्यैव कः ?'—न कस्यापि कोऽपि भवतीति ध्वन्यते ।

सानन्दमेष मकरन्दमिहारविन्दे
विन्देत षट्पदयुवेति जनैरटङ्कि ।
दैवादकाण्डपरिमुद्रितपुण्डरीक-
कोषादभूदहह निस्सरणं पुमर्थः ॥१४४॥

गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां
ताञ्चाप्यत्र विहाय[1] चम्पकवनं[2] तस्मा[3]त्सरोजं गतः ।
बद्धस्तत्र निशाकरेण बलिना[4] क्रन्दत्यसौ मूढधी-
स्सङ्कोचेन[5] विना पराभवपदं प्राप्नोति कामातुरः[6] ॥१४५॥

बन्धनान्यपि सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजबद्धः ॥१४६॥

प्रेमनारायणनृपस्य[7]

विगतामोदमरन्दे जरदरविन्दे समागतः सायम् ।
पुष्पन्धयो यमन्धो बन्धनमनिबन्धनं सहते ॥१४७॥

तस्यैव

विजहासितमेव जीवितञ्चेद्भवता भृङ्ग न मालतीवियोगे ।
निवसन्मदयन्तिकासमीपे दिवसं यापय काऽपकर्षलेखा ॥१४८॥

सपदि भ्रमसेन मधुव्रत त्वं
केनाधुना कथय कैरवर्णी मधूनि ।
याते यदा कमलिनीमिलने तदीयं
नामापि विस्मरसि घस्मरवत्स्मरारेः ॥१४९॥

मालत्या मकरन्दतुन्दिलतनोरासीदसीमं यशो
जातः पङ्कजिनीवने निरसतः कस्तेन वारिभ्रमः ।

१—'तां दृष्ट्वा स गतः' इति भाण्डागारे, पृ० ७९ । २—चन्दनतरुमिति सुभाषितावलौ, पृ० १२० । ३—पश्चादिति भाण्डागारे । ४—सहसेति भाण्डागारे; सुचिरमिति सुभाषितावलौ । ५—रोदित्यसौ मन्दधीः सन्तोषेणेति भाण्डागारे सुभाषितावलौ च । ६—'सर्वो जनः' इति भाण्डागारे; 'लुब्धो जनः' इति सुभाषितावलौ । ७—गायनारायणनृपस्येति कपुस्तके ।

वासन्तीमधुपानपीवरवपुस्त्वं भृङ्ग किं गायसे
ग्लानिः का महतामतोऽनुसरणान्नीचस्य यन्निर्वृतिः ॥१५०॥

मल्ली नात्र विकाशमेति नलिनीकेलिप्रथा विश्लथा
यूथी यातरसा रसालविटपी यातोऽधुना नीरसः।
जीवेदेष कथं मधुव्रतयुवा तद्वासरे शैशिरे
यद्यागामिमधुप्रसूनमधुभिस्तृप्तिं न सम्भावयेत् ॥१५१॥

कति सन्ति लता विपिने कुसुमस्तवका नमिताः खलु पल्लविताः
प्रतिचम्पकचन्दननीपवनीनवपङ्कजनीमधुसम्वलिताः।
सुचिरं कुसुमेषु परिभ्रमता न च मालति कापि तथा मिलिता
मधुपेन पुनर्मधुपानविधौ हृदये न यथा भवती कलिता[१] ॥१५२॥
पल्लीसं० कृष्णपत्युपाध्यायस्य

गमय समयमम्भोजन्मसम्भोगसौख्ये
विहर सह रमण्या सादरं कैरविण्या।
क्रकचकदनखेदं यासि सम्भावयेदं
मधुप मधुप मा भूः केतकीभर्त्सनाभूः ॥१५३॥
रामदासोपाध्यायस्य

## अथ शुकान्योक्तयः

अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः
स्फुटं नृत्यद्भृङ्गी विविधनवसङ्गीतकलनात्।
परानन्दैः पूर्णाः क इव तव वर्णावलिपद-
क्रमं श्रोता वेत्ता द्विजवर शुक भ्राम्यसि[२] कुतः ॥१५४॥

१—केन चिदन्येन कविनेत्थं वर्णितम्—
कति सन्ति लवङ्गलता ललिता नवकोरकिता धरणीमुतले
कति बन्धुरगन्धभृतस्तरवो गुरवो निवसन्ति गिरौ मलये।
अयि मालति सौरभसारविनिर्जितसंविकसत्कमलानिलये
मधुपानविधौ मधुपस्य पुनर्भुवने भवतीमहमाकलये ॥

२—भ्राम्यसीति भाण्डागारे।

द्राक्षां प्रदेहि मधुरां वदने निधेहि
देहे विधेहि किमु वा करलालनानि ।
जातिस्वभावचतुरः पुनरेव कीर-
स्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥१५५॥

इयं पल्ली भिल्लैरनुचितसमारम्भरसिकैः
समन्तादाकीर्णा विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥१५६॥

अपारः पाथोधिः पुलिनपदवी योजनशतं
निरालम्बो मार्गो बत वियति शून्या दश दिशः ।
इतोवायं कीरः कतिपयपदान्येव गगने
मुहुर्भ्रान्त्वा भ्रान्त्वा पतति गुणवृक्षे पुनरपि ॥१५७॥

उच्चैरेष तरुः फलं च विपुलं दृष्ट्वैव हृष्टः शुकः
पक्वं शालिवनं विहाय जड़धीस्तन्नारिकेलं गतः ।
तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने
आशा तत्र न केवलं विगलिता चञ्चूर्गता चूर्णताम् ॥१५८॥

सत्संगं समवाप्य यः पुरवने नानारसास्वादवित्
कीरः शास्त्रविचारचारुवचनैरानन्दकारी जने ।
दैवेनास्फुटवाक्प्रपञ्चपिहितश्रोत्रस्य तस्याटवीं
प्राप्तस्यात्मसभाप्रगल्भकपिषु स्यान्मौनमेवोचितम् ॥१५९॥

एकत्र प्राकृतैः साम्यमन्यत्र परतन्त्रता ।
शुकस्य परितोषाय न वनं न च पत्तनम् ॥१६०॥

भ्रातः कीर किमत्र यत्र विरसस्कन्धे[१] मधुस्यन्दिभि-
र्व्याहारैस्तव वस्तुवर्णितकथाबन्धैर्मुधाऽयं श्रमः ।

१—'नीरसतरुस्कन्धे' इति सदुक्तौ ।

नैते दालिमशाखिनः[1] परिणतैर्येषां फलैराकुलं[2]
निर्गत्यापि[3] गुणानुरक्तमशठैराविष्क्रियन्ते मुदः ॥१६१॥

लौलिकस्य

अये कीरश्रेणीपरिवृढ़ वृथा वासरशतं
तरोरस्य स्कन्धे गमयसि फलाशारभसतः[4]।
यदा पुष्पारम्भे मुखमलिनमा किंशुकतरो-
स्तदैवाभिज्ञातं[5] फलपरिचयो दुर्लभ इतः[6] ॥

## अथ चक्रवाकान्योक्तयः

नीराक्षीर[7]मुपैति रौति करुणं चिन्तां समालम्बते
कान्तां ध्यायति निश्चलेन मनसा योगीव युक्तेक्षणः।
स्वच्छायामवलोक्य कूजति पुनः कान्तेति हृष्टः खगो
धन्यास्ते खलु ये विमुक्तविषयाः कष्टं परं सङ्गिनाम् ॥१६३॥

नीलाम्भोरुहकानने न विशति ध्वान्तोत्कराशंकया
प्रक्रीडोच्छलिताश्च वारिकणिकास्ताराभ्रमात्पश्यति।
सत्रासं बहुवीक्षते च चकितो हंसीं हिमांशुभ्रमा-
न्न स्वास्थ्यं भजते दिवापि विरहाशङ्की रथाङ्गाह्वयः ॥१६४॥

एह्यालिङ्ग त्वरयति मनो दुर्बला वासरश्री-
राश्लिष्टासि क्षपय रजनीमेकिका चक्रवाकी।
नैवासक्तो न खलु कुपितो नैव रागच्युतो वा
दैवाधीनः सपदि भवतीं न स्वतः सन्त्यजामि ॥१६५॥

भानुकवेः

१ – 'शालिनः' इति कपुस्तकपाठः। २—फलैरन्तरमिति सदुक्तौ। ३—निर्भिद्यापीति सदुक्तौ। ४—'किमर्थं स्वं व्यर्थं क्षपयसि पलाशे रभसतः' इति भाण्डागारे, पृ० ११८। ५—तदैवेदं ज्ञातमिति भाण्डागारे। ६ —'दुर्लभतरः' इति भाण्डागारे। ७—तीराक्षीरमिति सदुक्तौ, पृ० १८७।

आयाति याति पुनरेव जलं प्रयाति
पद्माङ्कुराणि विचिनोति धुनोति पक्षौ ।
उन्मत्तवद्भ्रमति कूजति मुक्तकण्ठः
कान्तावियोगविधुरो निशि चक्रवाकः ॥१६६॥

कालिदासस्य

भङ्क्त्वा भीतो[1] न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्का-
त्ताराकारास्तृषार्त्तः पिबति न पयसां विप्लुषः पत्रसंस्थाः ।
छायामम्भोरुहाणामलिकुलशबलां वीक्ष्य[2] सन्ध्यामसन्ध्यां
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥१६७॥

लखिमाठक्कुराज्ञ्याः[3]

उत्कूजति श्वसिति मुह्यति याति तीरं
तीरात्तरुं तरुवरात्पुनरेति वापीम् ।
वाप्यां च मज्जति न चास्ति मृणालखण्डं
चक्रः चपासु विरहे खलु चक्रवाक्याः ॥१६८॥

## अथ चक्रवाक्यन्योक्तयः

आवेपते भ्रमति सर्प्पति मोहमेति
कान्तं विलोकयति कूजति दीनदीनम् ।
अस्तं हि भानुमधिगच्छति चक्रवाकी
हा जीवतेरपि वरं मरणं वियोगे ॥१६९॥

पक्षावुत्क्षिपति क्षितौ निपतति क्रोडं नखैरुल्लिख-
त्युद्वाष्पेण च चक्षुषा सहचरं सास्रं समुद्वीक्षते[4] ।

१—भोक्तुमिति पाठान्तरम् । २—वेत्तीति सदुक्तौ, पृ० २८७ । ३—चन्द्रस्येति भाण्डागारे; 'रजकसरस्वत्याः' इति सदुक्तौ, पृ० २८७ । ४—'ध्यात्वा मुहुर्वीक्षते' इति सदुक्तौ, पृ० २८८ ।

चक्राङ्गी दिवसावसानसमये तत्तत्कथाव्याकुला[१]
येनालोहितमण्डलोऽपि कृपया यात्येव नास्तं रविः ॥१७०॥

साहसाङ्कस्य

सूर्येऽप्यस्तमुपागते कमलिनीखण्डे च निद्रालसे
चक्री कान्तवियोगदुस्सहशिखिज्वालावलीताडिता ।
प्रत्युत्कूजति मूर्च्छति श्वसिति च व्याघूर्णते क्लाम्यति
भ्राम्यत्युद्भ्रमति प्रताम्यति निजप्राणान्मुहुर्निन्दति ॥१७१॥

एकेनार्कं हुतवहशिखापाटलेनास्तसंस्थं
पश्यत्यक्ष्णा सजलवलितेनापरेण[२] स्वकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्त्तकीव प्रगल्भा ॥१७२॥

मघोः

अधिरजनि व्याधगृहे
सुखमननुभूतमनुभूय ।
अपशोककोकमिथुनं
जीवनदाने समुल्लसति ॥१७३॥

या पूर्व्वेद्युः सरसबिसिनी प्रेयसा भुक्तशेषा
तां सन्ध्यातः प्रभृति दधती गाढचञ्चूपुटेन ।
तीरे तीरे विरहविकला कान्तमन्वेषयन्ती
प्राचीमूले निहितवदना खिद्यते चक्रवाकी ॥१७४॥

शङ्करमिश्राणाम्

समाजनोमूर्द्धवि यस्य हीयते
मनागपि प्राणसमासमागमः ।
इतीव कोका विरहार्ति कातरा-
त्समालपन्तीति समा-समा-समा ॥१७५॥

---

१—तत्तत्करोत्याकुलेति सदुक्तौ । २—सजललुलितेनापरेणेति सदुक्तौ ।

पक्षद्वन्द्वे चरणयुगले चञ्चुयुग्मे च पत्यु-
र्भुक्तोद्वृत्तं बिसकिसलयं चक्रवाकी दधाना ।
हा धिक् व्याधाहितमपि पुरो जालमालोकयन्ती
नैवोड्डीना न च विचलिता नाकरोदार्तनादम् ॥१७६॥

नाथूमिश्रस्य

एतस्मात्सरसश्चिराय चलितं चक्रेण चेतस्वता
नीरक्षीरपरीक्षकेण सुधिया हंसेन हा निर्गतम् ।
निर्य्यातं निभृतं कलध्वनिकृता कारण्डवेन क्वचि-
त्सार्द्धं केन करोतु सारसयुवा सम्भाषणं सव्यथः ॥१७७॥

आतपे धृतिमता सह वध्वा
यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मे-
र्दुःखिते मनसि सर्वमसह्यम् ॥१७८॥

भारवेः

भूयात्पुरेव पुनरेव रथाङ्गयूनो-
रस्तं गते तुहिनभासि विलासबन्धः ।
सर्वं भविष्यति न यास्यति विप्रयोग-
प्राणावलम्बनघृणाविषमो विषादः ॥१७९॥

## अथ बकान्योक्तयः

उभौ पक्षौ शुक्लौ दिवि च भुवि चाव्याहतगतिः[1]
सदा मीनं[2] भुंक्ते वसति सकलः स्थाणु[3]शिरसि ।
बके चान्द्रः सर्व्वो गुणसमुदयः कश्चिदधिको
गुणाः स्थाने मान्या न च पुनरमी[4] स्थानरहिताः ॥१८०॥

---

१—उभौ श्वेतौ पक्षौ चरति गगनेऽवारितगतिरिति भाण्डागारपाठः, पृ० ९० ।
२—मत्स्यं, पक्षे मीनराशिमिति भावः । ३—वृक्षादयः, पक्षे शिव इति यावत् ।
४—नरवर म त्विति भाण्डागारे ।

जाति[1]स्तस्य न मानसे न शुचिभिर्वृत्तिर्मृणालाङ्कुरै-
र्न ब्रह्मोद्वहनेन निर्म्मलयशःप्राप्तिर्न वाचां कलाः।
जीवन्सत्त्ववधेन बाह्यधवलो भ्राम्यन्सगर्वं पुन-
र्मिथ्यैवोन्नतकन्धरः शठबको हंसैः सह स्पर्धते ॥१८१॥

रे रे शिष्टबकोट नाकतटिनीतीरे तपस्विव्रतं
ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम्।
एवं यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि त-
न्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य ताः ॥१८२॥

बकोट ब्रूमस्त्वां लघुनि सरसि क्वापि शफरै-
स्तव न्याय्या वृत्तिर्न पुनरवगाढुं समुचितः।
इतश्चेतश्चाभ्रंलिहलहरिहेलातरलित-
क्षितिध्रग्रासैकग्रहिलतिमि[2]पोतः पतिरपाम् ॥१८३॥

## अथ केतकान्योक्तयः

हे हेमकेतकि किमुत्कटकण्टकाना-
मावेष्टनेन मधुपव्यवधानबुद्ध्या।
त्वञ्चेत्प्रसन्नहृदया किमु कण्टकेन
नो चेत्प्रसन्नहृदया किमकण्टकेन ॥१८४॥

रूक्षोभिर्दलितं वपुः कवलितं धूलीभिरन्तं दृशो
नीरन्ध्रैः क्रकचोपमैर्दलपुटैः पक्षद्वयं कीलितम्।
पूर्णाः सर्वमनोरथाः किमपरं कल्याणि कल्पायुतं
जीयाः केतकि देहि निर्गमपथं जीवत्वसौ षट्पदः ॥१८५॥

कमलिनीवनकेलिकलारसी
गुणवशीकृतकैरविणीगुणः।

१—जन्म। २—तिमिर्मत्स्यविशेषः; 'कृमि' इति कपुस्तकपाठः।

अलिरसौ तव सौरभलोभतः
पतति केतकिकण्टकसंकटे ॥१८६॥

स्वच्छन्दं सरसीषु सौरभमयं माध्वीकमास्वादयन्
कल्लोलावलिदोलितेषु कमलक्रोडेषु विक्रीडसि ।
दिग्धूलीकवलीकरिष्यति तले सूचीचयानामलं
विबुधः स्थास्यसि मूढ़ यास्यसि यदि त्वं केतकीकाननम् ॥१८७॥

हरिहरोपाध्यायस्य

## अथ कमलान्योक्तयः

अयि सरसिज सायं सन्निधानं त्वदीयं
भ्रमर उपगतोऽयं चूतमालां विहाय ।
अनुपममधुलोभाद्दूरतः साम्प्रतं त-
दिदमनुचितमेतन्मुद्रणं यन्मुखस्य ॥१८८॥

अयि दलदरविन्द स्यन्दमानं मरन्दं[1]
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः ॥१८९॥

पण्डितराजस्य

कमलिनि मलिनीकरोषि चेतः
किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते
जगति भवन्तु चिरायुषो मिलिन्दाः[2] ॥१९०॥

तस्यैव

किं कुप्यसि कस्मै चित्
सौरभसाराय कुप्य निजमधुने ।

१—मकरन्दमिति भावः । २—भ्रमराः ।

यस्य कृते शतपत्र
प्रतिपत्रं भ्रियसे[1] भ्रमरैः ॥१६१॥

रवावस्तं याते समुदयति खद्योतपटली
मराली मूकाऽभूत् कलकलमुलूका विदधते ।
इदं कष्टं दृष्ट्वा क्षणमसहमानाम्बुजवनी
मिलद्भृङ्गव्याजात्कवलयति हालाहलमिदम् ॥१६२॥

हंसादिभिर्भिकामं भुक्तं पीतं सजीवने सरसि ।
गतजीवने च तस्मिन्नहह विपन्ना नलिन्येव ॥१६३॥

रामदासोपाध्यायस्य

यत्र ब्रह्मसमुद्भवः कमलया यस्मिन्निवासः कृतः
पाणौ यत्परमेश्वरेण परमप्रेम्णा समारोपितम् ।
भो भो कुन्दकदम्बकेतकिजपापुष्पाणि वः प्रार्थये
तत्पद्मं कुसुमं वयश्च कुसुमान्येवञ्च कार्य्यं मनः[2] ॥१६४॥

उमानाथपण्डितस्य

## अथ समुद्रान्योक्तयः

निष्पीतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजतः परन्तु
पाथोनिधेः स्मरणमान्तरमावहेथाः ॥१६५॥

पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां
सुत्राम[3]त्रासभाजां त्रिदशविटपिनां जन्मभूमिस्त्वमेव ।
गाम्भीर्य्यन्तच्च तादृक् त्वयि सलिलनिधे किन्तु विज्ञाप्यमेतत्[4]
सर्वोपायेन मैत्रावरुणिमुनि[5]कृपादृष्टयः कांक्षणीयाः ॥१६६॥

---

१—'तेऽद्य मृग्यते' इति भाण्डागारे, पृ० २५५। २—कार्यो मदः इति कपुस्तकपाठः। ३—'सुत्रामा'—'इन्द्रः' इत्यर्थः। ४—'विज्ञाप्यसे हे' इति कपुस्तकपाठः। ५—अगस्त्यमुनेरित्यर्थः।

रत्नैरापूरितस्यापि मदलेशोऽपि नाम्बुधेः।
मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥१९७॥

पीयूषेण सुराः श्रिया मुररिपुश्चन्द्रश्रिया[1] मेदिनी
शक्रः कल्परुहा(हैः?)[2] शशाङ्ककलया श्रीशङ्करस्तोषितः।
मैनाकादिनगा निजोदरगताः संस्थानतः स्थापिताः
त्वच्चूलीकरणे घटोद्भवमुनिः[3] केनापि नो वारितः ॥१९८॥

पीयूषैः परितोषिता दिविषदो लक्ष्म्या हरिः प्रीणित-
श्चन्द्रेणैव विभूषितः स्मरहरः कल्पद्रुमैर्वासवः।
स्वात्मानं परिमथ्य तोयनिधिना केषां न किं किं कृतं
तस्यागस्तिकरस्थितस्य जलधेः कैर्नोद्धृताऽप्यङ्गुलिः[4] ॥१९९॥

उच्चैरुन्मथितस्य कार्यमखिलं[5] दैवेन धिक् कुर्वता
लक्ष्मीमस्य निरस्यतो जलनिधेर्जातं किमेतावता।
गाम्भीर्य्यं किमयं जहाति किमयं पुष्णाति नाम्भोधरान्
मर्य्यादां किमयं भिनत्ति किमयं न त्रायते वाडवम्[6] ॥२००॥

लक्ष्मीधरस्य

आदाय वारि परितः सरितां मुखेभ्यः
किन्नाम साधितमनेन[7] दुरर्णवेन।
क्षारीकृतश्च वडवावदने हुतश्च
पातालकुक्षिकुहरे विनिवेशितश्च ॥२०१॥

श्रीशुकस्य

वातोल्लासितकल्लोल
धिक् ते सागर गर्ज्जितम्।
यस्य तीरे तृषाक्रान्तः
पान्थः पृच्छति कूपिकाम् ॥२०२॥

१—मर्यादयेति भाण्डागारे। २—पारिजातवृक्षेणेत्यर्थः। ३—अगस्त्यमुनिरिति भावः। ४—श्लोकोऽयं कपुस्तके नोपलभ्यते। ५—तेन बलिनेति सदुक्तौ। ६—अग्निम् इति सदुक्तौ। ७—किन्तावदर्जितमनेनेति भाण्डागारे।

असौ वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमि[1]मकरमापास्यति मुनिः ॥२०३॥

विद्यापतेः[2]

हरिर्लेभे लक्ष्मीं सुरनगरनाथः[3] करिवरं
वरं चूडारत्नं स पुनरिह गौरीपरिवृढः ।
त्वया किम्वा लब्धं प्रकटय सखे मन्दरगिरे
ममन्थे येनायं सकलमहिमास्थानमुदधिः ॥२०४॥

एकत्राददते जलं जलधरव्यूहाः परत्राप्यमी
दीप्यद्दिक्करिणः परत्र वड़वावक्त्रोद्गता वह्नयः ।
एतावत्सततव्ययेऽपि सुतरामाश्चर्य्यमम्भोनिधे-
स्ता एव स्थितयः स एव महिमा सैवास्य गम्भीरता ॥२०५॥

शुद्धोऽपि स्वयमेव हन्त मथितो बद्धोऽपराधम्विना
निःश्रीकं समकारि वारिनिलयो नारायणेनामुना ।
अङ्कादेव पुनर्न मुञ्चति तथा तेनैव निर्णीयते
पुंसामाश्रयमागतेषु महतां दोषस्य नान्वेषणम् ॥२०६॥

लक्ष्म्या यत्र समुद्भवः समभवद्यस्मादभूत्कौस्तुभः
पीयूषस्य पिता त्वमेव जनिभूः कल्पद्रुमस्याम्बुधे ।
मुक्तानां जनकः पुनः किमपरं नाम्नापि रत्नाकरो
दूरात्कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥२०७॥

रे शम्बूक[4] वृथाऽभिगर्जसि कथं पाथोनिधौ वर्त्तसे
वर्षेंथा न महस्त्वमत्र भवतोऽनीयोपि(?) संदृश्यते ।

---

१—मत्स्यविशेषः । 'अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः' इति वाल्मिकीय-रामायणे । २—मालवरुद्रस्येति शार्ङ्गधरपद्धतौ, पृ० १७७ । ३—इन्द्रः । ४— शुक्तिके इति भावः ।

तत्तस्यैव गभीरतायुतहृदः संस्तूयते सर्वथा
यस्त्वामप्युरुरत्नमौक्तिकगणैः सार्द्धं सदा रक्षति ॥२०८॥

मैनाकादिनगेन्द्रपालनपटौ रत्नावलीवर्त्मनि
श्रीकृष्णावसतौ विलोललहरीविक्षिप्तमुक्तातती ।
उत्तुङ्गस्तनभारभंगुरसुरस्त्रीसञ्चयासेविते
शम्बूका विलसन्ति चेज्जलनिधौ किं जायतेऽस्य क्षतिः ॥२०९॥

एको भेकः परममुदितः प्राप्य गोष्पादनीरं
को-मे को-मे रटति सततं स्पर्द्धया वाक्यमुच्चैः ।
गङ्गादीनां सकलसरितां प्राप्य तोयं समुद्रः
किञ्चिद्गर्व्वं न वहति महान्प्रायशो भूरि रत्नैः[1] ॥२१०॥

देवैर्यद्यपि तक्रवद्विमथितः केदारवद्वानरै-
र्बद्धः सिद्धवदञ्जनात्मजनुषा कुल्यावदुल्लङ्घितः ।
किञ्चान्यच्चुलुकेऽम्बुबिन्दुवदभूद्द्राक्कुम्भयोनेर्म्मुने-
र्नापारोयमिति प्रथाजलनिधेरासीदथाविश्लथा ॥२११॥

हरिहरोपाध्यायस्य

येषामेकतरेण केनचिदपि प्राप्तेन पर्युत्सुको
मर्यादामवसाद्य माद्यति जनः क्षोणीमपि क्षोभयन् ।
वीचीभिर्विलुठन्ति तानि परितो रत्नानि वाराम्निधे-
र्नायं द्राक् प्रकृतिं जहाति महतां चित्तैर्विकारः कुतः ॥२१२॥

तस्यैव

लक्ष्मीजनयितुर्जाताः कियन्तो जलजन्तवः ।
सुत्राम[2]प्रार्थनापात्रं सोदरोऽस्याः सुरद्रुमः ॥२१३॥

तस्यैव

१—श्लोकोऽयं कपुस्तके नास्ति । २—इन्द्रस्येति भावः

वेला वनाली यदि नीरदानामपेक्षते नीरनिषेचनानि ।
गम्भीरता वा नवनीरता वा तरङ्गिता वा जलधेर्वृथैव ॥२१४॥

आस्तान्तावदहो समुद्रगरिमा दूरेऽपि कर्णे प्रिय-
स्तीरे यस्य पिपासया च मरणं प्राप्नोति सर्व्वो जनः ।
तस्मादम्बुनिधेर्वरं लघुसरः कूपोऽथवा वापिका
यत्र स्वात्मकरद्वयेन कमलं[1] पेपीयते स्वेच्छया ॥२१५॥

## अथ मेघान्योक्तयः

यत्पल्लवं समभवत्कुसुमं यदासी-
त्तत्सर्वमस्य भवतः पयसः प्रसादात् ।
यद्भूरुहः फलविधौ न ददासि वारि
प्राचीनमम्बुदयशो मलिनीकरोषि ॥२१६॥

धन्याः परार्थजनुषः सरितः समुद्राः
सम्प्राप्त एव सलिलानि समर्पयन्ति ।
दावानलाकुलमरुस्थलपादपानां
सेकाय वारिद पुनस्त्वमसि त्वमेव ॥२१७॥

एतेषु ते तरुणमारुतधूयमान-
दावावलीकवलितेषु महीरुहेषु ।
अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च
वज्रं पुनः क्षिपसि निर्दय कस्य हेतोः ॥२१८॥

कुसुमितरसालपनसान्कादम्बिनि के न सिञ्चन्ति ।
जीवनमसि त्वमेका शाखोटकविटपिवाटीनाम् ॥२१९॥

त्वयि वर्षति पर्ज्जन्ये सर्व्वे पल्लविता द्रुमाः ।
अस्माकमर्कवृक्षाणां पूर्वपत्रेऽपि संशयः ॥२२०॥

---

[1] —'क'मिति जलम् ; 'अलं' पर्याप्तमित्यर्थः ।

निष्पद्मं शिशिरेण धीवरगणैर्निर्मत्स्यनिष्कूर्मकं
व्याधैर्निर्विहगं निरम्बु रविना शून्यं मृणालैर्गजैः ।
निःशालूक[1]मकारि शूकरगणैर्नामैकमात्रं सरो
हे जीमूत परोपकारक पयोदानेन मां पूरय ॥२२१॥

किं शालशाल्मलिधरादिषु वारिदित्सा
तत्सेचनादतिघनादति कुत्र कीर्त्तिः ।
निर्वापयन् यदि न धावसि दावदाह-
मस्याम्बुवाहकुलचन्दनचन्दनस्य ॥२२२॥

हरिहरोपाध्यायस्य

ताराव्रातकुमुद्वतीं कवलयन् चन्द्रोज्वलाब्जं लिहन्
ज्योत्स्नाबालमृणालवलीं विदलयन् दिग्दन्तिनं द्रावयन् ।
सम्भोज्झन्मदवारिवारिमिषतो गर्ज्जन्नतीवोर्ज्जितं
गर्विष्ठः प्रतिगाहतेऽम्बरसरः कादम्बिनीकुञ्जरः ॥२२३॥

औन्नत्यं भवतः सुमेरुशिखरोच्छ्रायोपमां गाहते
व्याप्तिस्ते गिरिराजमूलमहिमन्यायेन निर्णीयते ।
एकस्यापि न किन्तु चातकशिशोः पूर्त्यै पयो वर्त्तते
बन्ध्यापीनपयोधरोपमतया बुद्धोसि[2] पाथोधर ॥२२४॥

दवदहनजटालज्वालजालाहतानां
परिमृदितलतानां म्लायतां भूरुहाणाम् ।
अयि जलधरशैलश्रेणिशृङ्गेषु तोयं
वितरसि बहुकोऽयं श्रीमदस्तावकीनः ॥२२५॥

जगतिसञ्च त्वमम्भोद तद्-
ब्रूमः किन्तु मनागरुन्तुदमिव श्रुत्वा न कोपं व्रज ।

१—उत्पलकन्दः । २—बुद्धदेवरूपोऽसीति भावः । ३—श्लोकेऽस्मिन् बौद्ध-सिद्धान्ताक्षेपः स्पष्ट एव ।

त्वं मूढोऽसि भुवि प्रयच्छसि पयस्तस्मै न यश्चातकः
कासारं सरितं सरित्पतिमपि त्यक्त्वाऽभवन्त्वद्भागभृत् ॥२२६॥

धिक् तं पयोधिमुदकान्यभितो न दीना-
मादाय येन दधिरे विरसानि कृत्वा ।
धन्योऽसि वारिधर यत्तु तयैव तानि
नीत्वा पुनर्मधुरतामुपनीय दत्से ॥२२७॥

सोपानानि तिरोहितानि पदवी छन्ना तृणैर्नूतनैः
कालुष्यं पयसां निरीक्ष्य शनकैरुड्डीय हंसा गताः ।
श्रूयन्ते न मधुव्रतोत्तमगिरः पद्मं निमग्नं जले[1]
मेकानामिह गर्जितं प्रतिदिशं[2] वृद्ध्यैव नष्टं सरः ॥२२८॥

पद्मपालिषु मनाक् कुहेलिकेहे केलिपरिपन्थिनी भव ।
मुञ्च शीकरभरेण वारि वारिवाहपदवी दवीयसी ॥२२९॥

हरिहरोपाध्यायस्य

यावद्वियोगविधुरां मधुरादरेण
भानुर्विनोदयति पङ्कजिनीं करेण ।
दुर्दैवदुर्विलसितोन्नमितेन ताव-
दाक्रान्तमम्बरमनेन दुरम्बुदेन ॥२३०॥

तस्यैव

त्वां दर्शयत्युदरमम्बुधिशुक्तयोऽन्त-
रासामवाकिर पयोधर वारिबिन्दून् ।
स्वातीमतीत्य पुनरेष्यति मौक्तिकाना-
माधानसाधनमयं सुचिरेण कालः ॥२३१॥

तस्यैव

१—'माधुर्यं न मधुव्रतोदितगिरां पद्मानि मग्नानि के' इति भाण्डागारे, पृ० २१० ।
२—'परमहो' इति भाण्डागारे ।

रे धाराधर धाव धाव धरणीं धाराभिरावर्त्तयन्
सोऽयं सम्प्रति दावपावकपराभूतोस्ति भूमीरुहः ।
अङ्गीकृत्य निजाङ्गभङ्गमुपले निष्पेषणं चात्मनः
पीयूषप्रतिमैर्द्रवैरसुमतां मथ्नाति दाहव्यथाम् ॥२३२॥

तस्यैव

ऊषरे सरसि शाल्मलीवने दावपावकचितेऽपि चन्दने ।
तुल्यमर्पयति वारि वारिदे कीर्त्तिरस्तु गुणगौरवैर्गतम् ॥२३३॥

तस्यैव

कर्तव्यो यदि वर्त्तते हृदि तरोरस्योपकारस्त्वया
मा कालं गमयाम्बुवाह समये सिञ्चैनमम्भोलवैः ।
पत्रे वैगलिते फले विगलिते[1] मूले गते शुष्कतां
किमामाप्यपरं करिष्यसि विभो धारासहस्रैरपि[2] ॥२३४॥

तस्यैव

दातुञ्चेत्तव शक्तिरस्ति जलद त्वं यत्सुधानिर्मलं
तोयन्देहि ममाग्रतः कटुतरं गर्जं पुनर्मा कृथाः ।
नाहं वारिद चातकस्तव पयोमात्रैकवृत्ति.... स्वं(?)
विस्तीर्यानुदिनं कदर्थनपरः त्वामेव यः सेवते[3] ॥२३५॥

अभिनवकालिदासस्य

अस्त्येवोद्दामदावानलविकलतरं काननं यत्र तत्र
प्रौढोत्तापाभिभूतं जगदपि सकलं निर्जला एव नद्यः ।
किं रे निर्लज्ज गर्जं कलयसि बहुशस्तर्जयन्पान्थबालाः
पर्जन्य त्वाममी किं क्वचिदपि गणयन्त्यम्बुदत्वेन लोकाः[4] ॥२३६॥

तस्यैव

---

१—'शीर्णे पुष्पफले दले विगलिते' इति भाण्डागारे, पृ० २१४। २—'कस्मै किं हितमाचरिष्यसि परीतापन्तु ते स्थास्यती'ति भाण्डागारपाठः समीचीनः । ३-४—श्लोकावमू कपुस्तके न स्तः ।

सन्तोष्य चातककुलं तपनोपतप्तं
निर्वाप्य दावदहनानि च काननानि ।
नाना नदीनदशतानि च पूरयित्वा
रिक्तोसि यज्जलद सैव तवोत्तमश्रीः ॥२३७॥

हरिहरोपाध्यायस्य

सरः पङ्कैः पूर्णं सरिदधिपतिर्नक्रनिविलः
सरित्तोयैरल्पा दवदहनकल्पा वनभुवः ।
प्रचण्डे चण्डांशौ करिवरकुलं सिञ्च लवशो
यशो यौष्माकीणं जलधर दिशो निर्मलयतु ॥२३८॥

## अथ चन्द्रान्योक्तयः

यज्जातोऽसि पयोनिधौ हरजटाजूटप्रसिद्धोऽसि य-
द्विश्वस्योदरदीपकोऽसि विधिना सृष्टोसि यच्चामृतैः ।
भ्रातः शीतमयूख सर्वमधुना म्लानीकृतं तत्त्वया
राजीवं यदपास्य[1] कैरवकुलं नीतं विकाशास्पदम् ॥२३९॥

साकूतं परिशीलिता कुमुदिनी कान्त्या दिशोऽलङ्कृताः
पीयूषैः सुखिता चकोरपरिषत् पाथोधिरुल्लासितः ।
शीतांशो भवता श्रियं कलयता के नाम नानन्दिता
दुर्दैवं कमलस्य केवलमहो येनैतदुत्ताम्यति ॥२४०॥

हिमकर परभागं द्योतयिष्यन्सुमेरो-
र्व्रजसि यदि किलाहं[2] न क्षमस्त्वां निरोद्धुम् ।
इति तु बहुविधाभिः काकुभिः प्रार्थये त्वां
पुनरपि कुमुदानामेत्य हार्य्यो विषादः ॥२४१॥

प्राग्यामिनि प्रियवियोगविपत्तिकाले
त्वय्येव वासरशतानि लयं गतानि ।

१—राजीवानि विहायेति कपुस्तके । २—तदाहमिति भाण्डागारस्थः पाठः, पृ० २२० ।

दैवात्कथं कथमपि प्रियसंगमेऽद्य
चाण्डालिनि त्वमपि वासर एव मग्ना ॥२४२॥

नामोदि कैरवमवर्द्धि नवाम्बुराशि-
र्नादीपि नाम्बरमनन्दि न वा चकोरः।
धिग्दैवदुर्विलसितं यदयं सुधांशु-
रभ्युद्यतश्च तमसा कवलीकृतश्च ॥२४३॥

रूपं नैव मनोविलासि महताप्याप्यादृतं सौरभं
नो वा षट्पदलोभको मधुलवो जन्मापि किं पल्वले।
यल्लोकेषु विकाशमेति कुमुदं स्पर्द्धामिथाम्भोरुहै-
स्तन्नूनं द्विजराज भव्यभवतो बान्धव्यमुज्जृम्भते ॥२४४॥

जातेयं रजनी सहैव भवता भावप्रकाशो दिशां
सूर्य्येणापि चिरं चकोरनिचयैः स्थेयं क्वचित्कानने।
उद्यद्दारुणचण्डभानुजटिलज्वाले जगन्मण्डले
कस्मै चन्द्र समर्प्य कैरवकुलं व्योमान्तमालम्बसे ॥२४५॥

न हि भवति वियोगः प्रीतिविच्छेदहेतु-
र्जगति गुणनिधीनां सज्जनानां कदापि।
घनपटलनिरुद्धो दूरसंस्थोऽपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥२४६॥

लक्ष्मीलास्यनिकेतनं हरिमहादेवादिभिर्वन्दितं
मूर्द्धन्याह्लादकरैर्ल्लसत्परिमलोद्गारैस्तरां सौख्यदम्।
पद्मं खेदयसि क्षपासु कुमुदामोदञ्च धत्से वृथा
रे दोषेश[1] कुतस्त्वयाधमतमैषा रीतिरासादिता ॥२४७॥

कुमुदे समुदेति तेऽनुरागः
कमले शीतरुचे[2] रुचेरभावः।

१ दोषा—रात्रिः—'दोषा च नक्तं च रजनाविती'त्यमरः। तस्या ईशश्चन्द्रः।
२—'हे चन्द्र' इति यावत्।

उचिताऽनुचिताऽभिधानमस्मिन्
विषये नोचितमैच्छिकोऽनुरागः ॥२४८॥

उडुगणपरिवारो नायकोऽप्यौषधीना-
मम्मृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विकलमूर्त्तिर्म्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वञ्च याति ॥२४९॥

प्रादुर्भूय पयोनिधेरयमभूद्भूमीधरोल्लङ्घको
लब्ध्वाकाशनिवासमाशु तिमिरच्छेदक्षमश्चन्द्रमाः ।
सामोदं कुमुदं विधाय जनतासन्तापहन्ता भव-
त्प्रायः पौरुषमेकमेव सुकृती कृत्वा न विश्राम्यति ॥२५०॥

प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः
स च सकलकलाभिः पूरितो नाभिवन्द्यः ।
अतिपरिचयदोषात् कस्य नो हन्ति मानं
नवनवगुणरागी प्रायशो मर्त्यलोकः ॥२५१॥

सखि साहजिकं प्रेम दूरादपि विराजते ।
चकोरीनयनद्वन्द्वमानन्दयति चन्द्रमाः ॥२५२॥

इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मा स्म भू-
न्नासीरेपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः ।
अप्यक्ष्णोर्मुदमुद्गिरन्ति कुमुदैरामोदयन्ते दिशः
सम्प्रत्यूर्द्ध्वमसौ तु लाञ्छनमभिव्यक्तुं प्रकाशिष्यते ॥२५३॥
मुरारेः

यदपि जन्म बभूव पयोनिधौ
निवसनं जगतीपतिमस्तके ।
तदपि नाथ पुराकृतकर्म्मणा
पतति राहुमुखे खलु चन्द्रमाः ॥२५४॥

भासय भूतलं वियदलंक्कारं कुरु त्वं करैः
कैरविणीं विनोदय दयाकारी चकोरे भव ।
एतस्मिन्हरिणेऽपि चन्द्र कत्रिना शून्यं मनो मा कृथाः
योऽसौ राहुवदार्दितोऽपि भवतो नैवान्तिकं मुञ्चति ॥२५५॥

नारायणशर्मणः

आनन्दं कृतमेव कैरवकुलं प्रोल्लासितो वारिधिः
सन्तापस्तपनोपलस्य शमितः कान्त्या दिशोऽलङ्कृताः[1] ।
एतेनाभ्युदयेन चन्द्र भवता त्रैलोक्यमाप्यायितं
कैवल्यं कमलस्य दैवघटितं नात्रापि निन्द्यो भवान् ॥२५६॥

विधिविहितनियोगयोगतोऽसौ
कमलमुदे समुदेति शीतरश्मिः ।
अथ यदि कुमुदिनी सुदैवदोषा-
द्भवति मलिनी तदा क्रियेत किं कैः ॥२५७॥

सौहार्द्रमस्ति हृदये विनयेन किम्वा
नोचेत्तदा कथय किं विनयैः सहस्रैः ।
स्तब्धानि कैरवकुलानि विकाशयन्ते
नो नम्रकञ्जकुसुमानि करा हिमांशोः ॥२५८॥

साधु चन्द्रमसि पुष्करैः कृतं
मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः ॥२५९॥

स्फीतो वा सुभगोऽथ वा गुणनिधिः किन्तावदेतावता
नो तावत्पुरुषोऽधिगच्छति यशो यावन्न निर्गच्छति ।
आसीदम्बुनिधौ शशी शफरवत्तस्मादकस्माद्बहि-
र्निर्गच्छँस्तिलकं बभूव हरितामीशस्य चूडामणिः ॥२६०॥

१—'लङ्घिताः' इति कपुस्तके ।

तृष्णालोलविलोचने कलयति प्राचीञ्चकोरीगणे
मौनं मुञ्चति किञ्च कैरवकुले कामे धनुर्धुन्वति ।
माने मानवतीजनस्य सपदि प्रस्थानकामेऽधुना
धातः किन्नु विधौ विधातुमुचितो धाराधराडम्बरः ॥२६१॥

कलाधिनाथाधिगमाद्द्वितीये
किमद्वितीयेति तनोषि गर्वम् ।
अयि त्वमस्मद्वचसि प्रतीया
अयं तृतीयामुपगन्तुकामः ॥२६२॥

तातः क्षीरनिधिः स्वसा च कमला भ्राता च कल्पद्रुमः
सौजन्यं सह विष्णुना किमपरं मौलौ धृतः शम्भुना ।
इत्थं शीतकरस्तथाऽप्यनुदिनं क्षीणः परं दृश्यते
प्रायः प्राक्तनमेव कर्म बलवत्कः कस्य कर्त्तुं क्षमः ॥२६३॥

जातश्चन्द्रो विमलजलधौ धूर्जटेर्मौलिवासं
लेभे शोभामधिकमधिकं दिग्वधूनां ततान ।
अन्तस्तापं सकलजगतां बाल एव व्यनासीत्
को जानीते यदिह भविता पूर्णतायां कलङ्कः ॥२६४॥

## अथ वृक्षान्योक्तयः

किं जातोऽसि चतुष्पथे घनतरच्छन्नोऽसि किं शाखया[1]
छन्नश्चेत् फलितोऽसि किं बहुफलैराढ्योसि किं सन्नतः[2] ।
हे सद्वृक्ष सहस्व सम्प्रति मुहुः शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥२६५॥

अध्वन्यध्वनि तरवः
कति कति पथिकैरुपाश्रितच्छायाः[3] ।

१—'घनच्छायोऽसि किं छायये'ति सदुक्तौ, पृ० २६६ । २—'युक्तश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि कस्मान्नतः' इति सदुक्तौ । ३—पथि पथि पथिकैरुपास्यते छायेति भाण्डागारे, पृ० २४७ ।

स तु विरलो वनविटपी
यं गृहजातोऽध्वगः स्मरति ॥२६६॥

लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां
दुर्वंशैः कठिनैरसारहृदयैराकीर्णमेतद्वनम् ।
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला
न स्वान्येव कुलानि केवलमहो सर्वं दहेयुर्वनम् ॥२६७॥

आनन्दकन्दमकरन्दकरम्बितानि
पङ्केरुहाणि परिहृत्य समागतस्त्वाम् ।
सौरभ्यसारि सहकारि तथा विधेयं
येनोपहासविषयो न भवेद् द्विरेफः ॥२६८॥

सन्तापहन्ता भविताऽसि नून-
मित्याशया चन्दन रोपितोऽसि ।
ज्ञातश्च तन्वीमभुजङ्गसङ्गी
भविष्यसि प्राणभयङ्करोऽपि ॥२६९॥

आसीन्महानेष मनोरथो मे
सहस्रशाखी भविता रसालः ।
मदीयदुर्दैवमतङ्गजेन
हा हन्त बीजाङ्कुर एव भग्नः ॥२७०॥

यद्यपि सन्ति वसन्ते
प्रकटितमकरन्दबिन्दवस्तरवः ।
तदपि रसाल इहैकः
कोकिलहृदये सदा वसति ॥२७१॥

नन्दन्ति नन्दनवनेषु महीरुहा ये
तेषु त्वमेव हरिचन्दन वन्दनीयः ।

स्मृत्वा महेन्द्रमहिषी दिविषन्नमस्या
यस्यावतंसयति मञ्जरिमादरेण ॥२७२॥

ये शाखोटकशाल्मलिप्रभृतयस्ते शाखिनः केवलं
भूभाराय भवन्ति भूमि[1]तिलकप्रख्यैस्तदाकर्णय ।
छिन्ना एव भवादृशा विटपिनो येषान्तले शीतले
मध्याह्नार्कमरीचितप्ततनवः पान्थाः सुखे शेरते ॥२७३॥

आनीतो मलयाचलान्मलयजो रत्नस्थले रोपितः
पीयूषेण परिप्लुतः प्रतिदिनं यत्नेन सम्वर्द्धितः ।
आरब्धं यदि तेन सौरभभरैर्भूमण्डलं वासितुं
तस्मिन्नेव दिने विधातृवसतो वज्रेण चूर्णीकृतः ॥२७४॥

यन्नादृतस्त्वमलिना मलिनाशयेन
किन्तेन चम्पक विषादमुरीकरोषि ।
विश्वाभिरामनवनीरदनीलवेषाः
केशाः कुशेशयदृशः कुशलीभवन्ति ॥२७५॥

अतिपरिचयादवज्ञा
सन्ततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री
चन्दनतरुमिन्धनं कुरुते ॥२७६॥

पत्राणि राजरमणीकरसोदराणि
माणिक्यमञ्जुरुचिराणि च कोरकाणि ।
काकैकभोजनफलानि मलीमसानि
शोकाय केवलमशोकतरोः फलानि ॥२७७॥

नोत्पद्यन्ते क इह तरवः के न पत्रैर्वलन्ते[2]
के नो पुष्पैर्दधति सुषमां के फलैर्नानमन्ति ।

१—वृक्षेति कपुस्तकपाठः । २—'लभन्ते' इति आदर्शपुस्तकपाठः ।

एतद्ब्रूमस्तदपि महतोऽप्यर्थितार्थस्य पूर्त्तिं
कर्त्तुं शक्तो जगति सकले केवलं कल्पवृक्षः ॥२७८॥

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
छाया नापि परोपकारकृतये वर्त्मस्थितस्यापि मे ॥२७९॥

हे पुन्नाग किमात्थ कुब्जकसखे त्वत्सन्निधौ रोपणा-
न्मालाकारकुटुम्बिनी सकरुणा मन्ये निकामं मयि ।
चीये यद्भवता समं सरभसं दीये तथैकस्रजि
स्मेरापाङ्गतरङ्गितैर्मृगदृशां वृन्दैर्निधीये हृदि ॥२८०॥

यद्यपि चन्दनविटपी
फलकुसुमैर्व्विवर्ज्जितो विहितः[1] ।
निजवपुषैव परेषां
तथापि सन्तापमपनयति ॥२८१॥

भट्टावित्यस्य

याता यन्मकरन्दबिन्दुनिकरैरार्द्रास्तटक्षोणयो
नीतं[2] तुन्दिलताकुलं मधुलिहां दिग्भ्यो यदभ्यागतम् ।
आमोदैरधिवासिता[3] दश दिशः सोऽप्यद्य किं कथ्यता-
मेकस्यापि मधुव्रतस्य विनये व्यग्रो रसालद्रुमः ॥२८२॥

निस्सूनाः[4] कति शाखिनः कतिपये निस्सौरभाः केऽप्यमी
नो दद्युर्म्मधु केऽपि कण्टकशतैर्जुष्टाः परे दुर्लभाः ।
इत्थं नो लभते पदानि मधुपस्त्वामाश्रितः प्रत्यहं
तत्कार्यं सहकार यन्न हि लभेल्लज्जामसौ षट्पदः ॥२८३॥

१—'विधिना फलकुसुमवर्जितो विहितः' इति भाण्डागारे, पृ० २४८। २—'प्राप्तं' इति कपुस्तकपाठः। ३—परिपूरिता': इति कपुस्तके। ४—पुष्पितपुष्परहिताः—'सूनाख्या पुष्पिते पुष्पे' इत्यजयः।

छायाभिः प्रथमं ततः सुकुसुमैः पश्चात्फलैः स्वादुभिः
प्रीणात्येष तरुः प्रतीतिपथिकैः[1] श्रान्तैः समाश्रीयते।
को जानाति यदत्र कोटरतटे प्रत्यग्रहालाहल-
ज्वालाजालकरालकालवदनः क्रूरः फणी वर्तते ॥२८४॥

साधारणतरुबुद्ध्या
मया न बद्धस्तवालवालोऽपि।
लज्जयसि मामिदानीं
चम्पक भुवनाधिवासिभिः कुसुमैः ॥२८५॥

मोहनोपाध्यायस्य

न तादृक्कर्पूरे न च मलयजे नो मृगमदे
फले वा पुष्पे वा त्वयि वसति यादृक् परिमलः।
परन्त्वेको दोषः फलपरिणते चूत नितरां
पिके वा काके वा लघुगुरुविशेषो न भवताम् ॥२८६॥

येऽमी ते मुकुलोद्गमादनुदिनं त्वामाश्रिताः षट्पदा-
स्ते भ्राम्यन्ति फलाद्बहिः कथमहो दृष्ट्वा न सम्भाषसे।
ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे
धिक् त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥२८७॥

उद्यानपाल कलशाम्बुनिषेचनाना-
मेतस्य चम्पकतरोरयमेव कालः।
अस्मिन्निदाघनिहिते घनवारिणा वा
सम्वर्द्धिते तव वृथोभयथोपभोगः ॥२८८॥

नासञ्जितोऽसि तरुणीकरपल्लवेन
सिक्तोऽसि नेन्दुवदनावदनासवेन।
कुग्रामपामरनिकेतनसन्निधाने
केनेह केसरतरो वत रोपितोऽसि ॥२८९॥

१—पथीति पथिकैरिति भाण्डागारपाठः

हंसाः पद्मवनाशया मधुलिहः सौरभ्यलाभाशया
कीराः पक्वफलाशया बलिभुजो[1] गृध्राश्च मांसाशया।
दूराद्दर्शितकायकाण्डनितरां[2] निःसारमिथ्योन्नते
रे रे शाल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः ॥२६०॥

किंशुक मावह गर्वं
निजशिरसि भ्रमरोपवेशनेन।
विकचकमलमालतीवियोगा-
दनलधिया त्वयि मज्जति द्विरेफः[3] ॥२६१॥

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितघटनासंविधाता विधाता।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥२६२॥

## अथ पर्वतान्योक्ती

तस्मादक्फणिराजरज्जुकषणं दुःसाद्(?)पक्षच्छिदा
धातारुन्तुदमप्यहो कथमसौ मन्थाचलः सोढवान्।
एतेनैव दुरात्मना जलनिधेरुत्पाद्य पापामिमां
लक्ष्मीमीश्वरदुर्गतव्यवहृतिर्व्यस्तं जगन्निर्मितम् ॥२६३॥

किन्तेन हेमगिरिणा रजताद्रिणा वा
तत्र स्थिता हि तरवस्तरवस्त एव।
वन्दामहे मलयमेव तदाश्रयेण
शाखोटनिम्बकुटजा अपि चन्दनानि ॥२६४॥

१—काकाः। २—दूरादुत्तमपुष्परागनिकरैरिति भाण्डागारे, पृ० २५३। ३—भाण्डागारे तु इत्थं पठितोऽयं श्लोकः—

त्यज किंशुक पुष्पिताभिमानं निजशिरसि भ्रमरोपसेवनेन।
विकसन्नवमालिकावियोगात्कुरुते वह्निधिया त्वयि प्रवेशम्—पृ० २५३-५४।

## अथ शफरान्योक्ती

सरोरत्नात्तस्माच्छफर नवनीरावतरण-
प्रणालीसञ्चारव्यसनमशिवं ते कथमभूत् ।
अये मुग्धेदानीं निजदुरुपचारव्यसनजां
कुवेणीबद्धः सन्ननुभव दशामुत्फलसि किम् ॥२६५॥

कैवर्तकर्कशकरग्रहणाच्च्युतोऽपि
जाले पुनर्निपतितः शफरो वराकः ।
दैवात्ततोऽपि चलितो गिलितो बकेन
वामे विधौ वद कथं पुरुषार्थसिद्धिः ॥२६६॥

## अथ दारिद्र्यनिन्दा

न याति समता समैर्न खलु मूल्यमालम्बते
खलेन करकौशलादहह दूरमुद्धूयते ।
वृथैव विवृताननो निरभिसन्धि शब्दायते
पुलाक[1] इव लाघवं व्रजति निर्धनो मानवः ॥२६७॥

उन्नतोऽपि विशदोऽपि कोमलोऽ-
प्यद्य जाड्यहरणक्षमोऽपि च ।
अन्तरुज्ज्वलगुणोऽपि निर्धन-
स्तूलराशिरिव याति लाघवम् ॥२६८॥

जातिर्यातु रसातलं गुणगणास्तस्याप्यधो गच्छतां
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥२६९॥
भर्तृहरेः

१—तुच्छधान्यम्—'स्यात्पुलाकस्तुच्छधान्यं' इत्यमरः

अभिलषितपद्मयोनौ निःस्ववधूनां सुतान्स्रष्टुम् ।
स्वं स्वं विशङ्कमाना वेपन्ते क्रकचवर्त्तिनो लोकाः ॥३००॥

उत्पद्य हृदि लीयन्ते दरिद्राणां मनोरथाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव ॥३०१॥

हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥३०२॥

चौरेभ्यो न भयं न दण्डपतनं त्रासो न पृथ्वीपते-
र्न्निःशंकं शयनं निशापि गमनं दुष्टेऽपि मार्गे सदा ।
दारिद्र्यं सुखकेवलं शुभमयं दुःखद्वयं वर्तते
आयाति स्वजनः स याति विमुखः सर्वत्र मन्दादरः ॥३०३॥

## अथ धनप्रशंसा

धनमेव धरणिवलये कलयति सफलायुषं पुरुषम् ।
यदि जीवति धनरहितः कथय मृतः कीदृशो भवति ॥३०४॥

तावदेव नरः पूज्यो यावदेव धनान्वितः ।
निर्द्धनो लघुतां याति वारिशून्यो यथा घटः ॥३०५॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्व्वे गुणाः काञ्चनमाश्रयन्ति ॥३०६॥
भर्तृहरेः

## अथ नानाप्रकारपद्यानि

श्रुतिवाग्लोचनहरणं कुरुते लक्ष्मीर्ज्जनस्य को दोषः ।
गरलसहोदरभगिनी तच्चित्रं यन्न मारयति ॥३०७॥

लक्ष्मीर्यादोनिधे[1]र्य्यादो[2] नादो वादोचितं वचः ।
विभ्यती धीवरेभ्यो[3] या जड़ेष्वेव[4] निमज्जति ॥३०८॥

उद्वेजयति दरिद्रं परमुद्राया झणत्कारः ।
गृहपतिरतिमिलितायाः कङ्कणरावो यथा जारम् ॥३०९॥

नापि भोक्तु न च त्यक्तु शक्नोति विषयाञ्जरी ।
अस्थिनिर्दसनस्यैव जिह्वया लेढि केवलम् ॥३१०॥

न दातु नोपभोक्तु च शक्यते कृपणः श्रियम् ।
मुहुः स्पृशति हस्तेन नपुंसक इव प्रियाम् ॥३११॥

द्रव्यं परिमितमधिकन्यथिनं जनमाकुलीकुरुते ।
चोणांशुकमिव पीनस्तनजघनायाः कुलीनायाः ॥३१२॥

गोवर्धनाचार्यस्य

विशालवंशोद्भवमुज्ज्वलं धनुर्गुणेन हीनं रमते न जातु ।
अचेतने चेदियमस्ति रीतिः सचेतने वस्तुनि किम्वदामः ॥३१३॥

गुणिगणगणनारम्भे न पतति कठिनी[5] ससंभ्रमाद्यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥३१४॥

विष्णुशर्म्मणः

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्कमलं न दर्दुरस्त्वेकवासोऽपि ॥३१५॥

मेघं दृष्ट्वा नृत्यसि वदसि कुवाचो निसर्गतोऽमधुराः ।
शिखिसंहतिकौतुकमनुकरोषि रे मेक मुग्धोऽसि ॥३१६॥

१—समुद्रस्य २—जलजन्तु :—'यादांसि जलजन्तवः' इत्यमरः । ३—मत्स्यजीविभ्यः, पक्षे विचक्षणेभ्यः । ४—मूर्खेषु कदर्येषु वा, पक्षे जलेषु, डलयोः सावर्ण्यात् । ५—लेखिनीति यावत् ।

पुरा मे पुण्यानां परिणतिरभूत्प्राप्य भवती-
मतीव त्रैलोक्ये सुखमजनि सौभाग्यगणना ।
अभागिष्टोल्लेखप्रथमगणनायामुपगतः
स एवाहं सीते सपदि विपरीते वत विधौ ॥३१७॥

छेदश्चन्दनचूतचम्पकवने रक्षा च शाखोटके
हिंसा हंसमयूरकोकिलकुले काकस्य नित्यादरः ।
मातङ्गे[1] खरक्रयश्च समता कर्पूरकार्पासयो-
रेषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥३१८॥

पारीन्द्रस्य पराभवाय सुरभीमांसेन दुर्म्मेधसा
पोष्यन्ते प्रतिवासरं कटुगिरः श्वानः प्रयत्नादमी ।
नन्वेतैर्म्मदमत्तवारणघटाविद्रावणः केसरी
जेतव्यः खलु किं किरात भवतो लाभः परं गोवधः ॥३१९॥

परीवादस्तथ्यो भवतु वितथो वापि महतां
तथाप्युच्चैर्द्धाम्ना हरति महिमानं जनरवः ।
तुलोत्तीर्णस्यापि प्रकटमहिमाशेषतमसो
रवेस्तादृक् तेजो न हि भवति कन्याङ्गतवतः ॥३२०॥

शङ्करमिश्रस्य

ऊर्णां नैष ददाति नैव विषयो दोहस्य वाहस्य वा
तृप्तिर्न्नास्ति महोदरस्य बहुशैर्घासैः पलालैरपि ।
हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते
को गृह्णाति कपर्दकैरमुमिति ग्राम्यैर्गजो हास्यते ॥३२१॥

सूते शूकरगृहिणी झटिति कुपुत्रान् सहस्रशो बहुशः ।
करिणी चिरमपि सूते कमपि महीपालशालितं करभम् ॥३२२॥

१—खरक्रयस्समतुलेति कपुस्तके ।

श्रिया गेहमयारण्ये रामस्त्यक्तस्त्वया पथि ।
वद मुद्रे पुरन्ध्रीणां प्रत्ययं कः करिष्यति ॥३२३॥

इयता वयसा न साधितं यत्परतः किनु करिष्यतीति वेधाः ।
तिलतण्डुलितास्य रोमरेखाछलतः सजलचूर्णमालिलिम्प ॥३२४॥

त्वय्यालेख्यगते प्रियैष मदनः कान्ते कृतान्ते कथं
भ्रान्तासीति मुहुर्विवादरसिकौ पप्रच्छतुः शिल्पिनम् ।
तेनाथो नृपदेवदत्त भवतः संकीर्त्तिते नामनि
व्रीडावारिनिधौ ममज्जतुरिमौ युष्मद्विषद्दम्पती ॥३२५॥

जाने सङ्कीयमाने युवतिभिरभितो भूपरूपस्य बिन्दौ
दस्रौ जाता त्रुचस्रौ मदनमधिरतेरप्युदासीनतासीत् ।
रम्भादृष्टिं न सम्भावयति धनदजे किञ्च कर्तुं विलासा-
भासासंकोचमासादयति बलरिपौ सा पुलोमात्मजापि ॥३२६॥

आनन्दकरमिश्रस्य

कूर्पासेन स्थगितहृदया संपुटं हाटकीनं
मस्तन्यस्ताञ्चलविरचना चामरं वारिदाभम् ।
यत्रासीना रतिरिव वणिक्प्रेयसी वीथिकायां
विक्रीयन्ते मुकुलितमुखी संज्ञया मौक्तिकानि ॥३२७॥

गोविन्दनन्दनतया च वपुःश्रिया च
माऽस्मिन्नृपे भजत कामधियं तरुण्यः ।
अस्त्रीकरोति विजये जगतः स्मरस्त्री-
रस्त्रीजनः पुनरनेन विधीयते स्त्रीः ॥३२८॥

श्रीहर्षस्य

उत्तमर्णधनदानशङ्कया पावकोत्थशिखया हृदिस्थया ।
दैवदग्धवदना सरस्वती नास्यतो बहिरुपैति लज्जया ॥३२९॥

केशान् संस्कुरु मा कपोलफलके मा पत्रभङ्गिं कृथाः
ताम्बूलञ्च विमुञ्च किञ्च सुभगे मा वक्त्रमालोकय ।

पल्लीं नागरिपामरीपरिवृतां प्राप्तासि दुर्दैवतो
वैदग्ध्यं न गुणाय किन्त्विह परीवादाय संजायते ॥३३०॥

इतरतापशतानि[1] यदृच्छया वितर तानि सहे चतुरानन ।
अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥३३१॥

कविताकलनेन किं नृपाणां यदि कवयो न लभन्ति पूर्णकामाः(नू?) ।
नयनेन किमेणलोचनानां यदि वक्रं न विलोकिता युवानः ॥३३२॥

वसु यच्छतु वा न वा नरेशो यदि कर्णे कविभणितिं शृणोति ।
रतिमिच्छतु वा न वा नवोढा यदि केलीगृहदेहलीमुपैति ॥३३३॥

भेको धावति गर्वितो नवजलैर्हृष्टः पतङ्गं प्रति
भेकं धावति कालकूटविषदः सर्प्पो द्विजिह्वं शिखी ।
तञ्चाखेटक एव धावति परं व्याघ्रस्तमाखेटक-
मित्यन्योन्यवधानुरागरसिकाः पश्यन्ति नात्मक्षयम् ॥३३४॥

कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना
व्याधोऽधः शरचापसंधृतकरः श्येनः परिभ्राम्यति ।
इत्थं सत्यहिना स दष्ट इषुणा श्येनस्तु तेनाहत-
स्तूर्णं तौ तु गतौ यमालयमहो दैवी विचित्रा गतिः ॥३३५॥

## अथ सज्जनप्रशंसा[2]

सौजन्यधन्यजनुषः पुरुषाः परेषां
दोषानपास्य गुणमेव गवेषयन्ति ।
हित्वा भुजङ्गमविषाणि पटीरकोषा-
त्सौरभ्यमेव पवनाः परिशीलयन्ति ॥३३६॥

आकोपितोऽपि सुजनो न वदत्यवाच्यं
निष्पीडितो मधुरमुद्गिरतीक्षुदण्डः ।

१—कर्मफलानीति भाण्डागारे, पृ० २४ । २—नानारत्नाकृतीनि चतुर्दशपद्यान्येता-
नीति कपुस्तके ।

नीचो जनो गुणशतैरपि सेव्यमानो
हास्येन यद्वदति तत्कलहेऽप्यवाच्यम् ॥३३७॥

गर्जति शरदि न वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति कुरुते हि सज्जनो लोकः ॥३३८॥

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ।
अपरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥३३९॥

गोवर्धनाचार्यस्य

सुजनो न याति वैरं
परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः
सुरभयति मुखं कुठारस्य ॥३४०॥

व्यासस्य[1] Sundarajam

अपकारिणि चेत्कोपः
कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां
प्रसह्य परिपन्थिनि ॥३४१॥

किं जन्मना मलयभूधरगन्धसार
किम्वा महाजनललाटसमाश्रयेण ।
सौरभ्यमर्जय वशीभवतीह येन
शाखोदरो हि जठराहितकालकूटः ॥३४२॥

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम् ।

१—रविगुप्तस्येति भाण्डागारे, पृ० ४९; शार्ङ्गधरपद्धतौ च पृ० ३८; श्रीव्यास-पादानामिति सदुक्तौ, पृ० ३०१ ।

शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता[1]
ये चैवं पुरुषाः कलासु कुशलाः तेष्वेव लोकस्थितिः ॥३४३॥
भर्तृहरेः

सत्तर्क इव हेतुदोषं छेत्तुं बाधादिकं सहते ।
साधनमिव सत्पुरुषः परसिद्ध्यैष्यतां(?)सहते ॥३४४॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
येष्वेते निवसन्ति निर्म्मलगुणास्तेभ्यो नरेभ्यो[2] नमः ॥३४५॥
भर्तृहरेः

ये दीनेषु दयालवः स्पृशति यानल्पोपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
स्वस्थाः सन्ति च यौवनोदयमहाव्याधिप्रकोपेऽपि ये
ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः[3] ॥३४६॥

दग्धं दग्धं त्यजति न पुनः काञ्चनं शुद्धवर्णं
छिन्नश्छिन्नस्त्यजति न पुनः स्वादुतामिक्षुदण्डः ।
घृष्टं घृष्टं त्यजति न पुनः चन्दनं चारुगन्धं
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥३४७॥

ते ते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानवराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥३४८॥
भर्तृहरेः

१—कान्ताजने धृष्टतेति पाठान्तरम् । २—'महद्भ्यः' इति पाठान्तरम् ।
३—शब्दार्णवस्येति सदुक्तौ, पृ० ३०१; 'तैः स्तम्भैरिव सुस्थितैः कलिभराक्रान्ता धरा धार्यं-ते' इति भाण्डागारे, पृ० ५५, शार्ङ्गधरपद्धतौ च, पृ० ३७ ।

मद्गोःशृङ्गं सप्ततालप्रमाणं मेरोःशृङ्गं सर्षपस्यैकदेशम् ।
अब्धौ लुब्धे साधु नीचोपकारे बिन्दुः सिन्धुः सिन्धुरप्येकबिन्दुः ॥३४९

क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं
क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः ।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥३५०॥

भर्तृहरेः

महतां स्थानमाश्रित्य फलं कर्मानुसारिणी ।
शिवस्य कण्ठलग्नोऽपि वातं पिबति वासुकिः ॥३५१॥

बहिः सर्वाकारप्रकृतरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमभिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनञ्च भजते ॥३५२॥

मालत्याः

उर्व्वीं गुर्व्वीं वहति सततं नृत्यतो भूतभर्त्तु-
र्भूत्वा हारो भवति शयनं किञ्च विश्वम्भरस्य ।
एतत्कर्म त्रिजगति परं शेषनागैकशक्यं
मेकानन्ये विपुलवपुषो भोगिनो भक्षयन्तु ॥३५३॥

शूलपाणिशर्म्मणः पण्डितस्य

प्रियप्रायावृत्तिर्व्विनयमसृणो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्य्यासितरसं
रहस्यं साधूनामनुपमविशुद्धं विजयते ॥३५४॥

भवभूतेः[1]

१—उदात्तराघवे भवभूतेरिति कपुस्तके ।

विगुणोऽपि काव्यबन्धः साधूनामाननङ्गतः स्वदते ।
फूत्कारोऽपि सुवंशैरनूद्यमानं श्रुतिं हरति ॥३५५॥

गोवर्द्धनाचार्यस्य

अयन्निजः परो वेत्ति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बिनी ॥३५६॥

केशटस्य

## अथ दुर्ज्जननिन्दा

मैत्री न मङ्गलकरी कलहो न योग्यो
न श्रेयसेऽनुचरता प्रभुता न भूत्यै ।
तद्दूरदूरतरदूरतमातिदूरा-
दौदास्यमेव हि वरं खलु दुर्ज्जनानाम् ॥३५७॥

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥३५८॥

सुबन्धोः

न दुर्ज्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः ।
भूयोऽपि सिक्तः पयसामृतेन न निम्बवृक्षो मधुरत्वमेति ॥३५९॥

खलः सर्षपमात्राणि परछिद्राणि पश्यति ।
आत्मनो विल्वमात्राणि पश्यन्नपि न पश्यति ॥३६०॥

अपूर्वा रसनाव्याली खलाननविलेशया ।
कर्णमूले दशत्यन्यं हरत्यन्यस्य जीवितम् ॥३६१॥

आरम्भगुर्व्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥३६२॥

भर्तृहरेः

मुखे मिष्टा वाणी मनसि कटुतिक्तं विलसितं
परोक्षे पैशून्यं नयनपुरतो बन्धुचरितम् ।
प्रहारो वज्राणां कुसुमसुकुमारेण विधिना
खलानां शैलीयं निभृतपरिपाका विजयते ॥३६३॥

खलः करोति दुर्वृत्तिं नूनं पतति साधुषु ।
रावणेन हृता सीता बन्धनं स्यान्महोदधेः ॥३६४॥

अतिमलिने कर्त्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥३६५॥

सुबन्धोः

विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचां सलिलमुचां मलिनमाऽधिकाः ॥३६६॥

हस्त इव विभूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् ।
दर्पण इव तं कुरुते तथा तथा निर्मलच्छायम् ॥३६७॥

शृण्वन् वंशीमधुरनिनदं यो विलादुज्जहीते
रोषं तोषाद्विषधरगुरुं स्वाभाविकं संहरन् ।
आत्मा येनासति च विभवे तोषदायः कृतश्च
कस्य द्वेष्यो भवति भुजगो नो यदि स्याद्द्विजिह्वः ॥३६८॥

लज्जाधैर्यविवेकशीलविनयान् हुत्वा समित्पञ्चकान्
दोषौधानविधानमाकरमहामन्त्रं हृदा चिन्तयन् ।
यावज्जीवमहो जुहोति पिशुनो दौर्जन्यदीप्तानले
जिह्वाजीर्णजुहूमुखेन महतां हैयङ्गवीनं यशः ॥३६९॥

दोषादोषजुषः सन्तो गुणद्वेषरताः खलाः ।
द्वेषवत्वाद्विशेषेऽपि महदन्तरमेतयोः ॥३७०॥

आप्तः स एव भुवि यः परदोषमध्या-
दास्वाद्य हृद्यगुणदोषमुरीकरोति ।

दोषं विचार्य कथयत्यपि सोऽपि धन्यो
यो दूषयत्यथ मृषैव बिभेमि तस्मात् ॥३७१॥

खलस्य चित्ते हि परस्य कीर्त्ति-
र्न जातु नूनं पदमादधाति ।
दधाति चेन्नाशमुपैति तूर्णं
यथा कुलीनाहृदयेषु कोपः ॥३७२॥

कीर्त्तिः परेषां कुलनायिकेव गेहात्खलास्याञ्च बहिः प्रयाति ।
अकीर्त्तिरेतद्रसनाग्रवंशे तनोति शैलूषसुतेव नृत्यम् ॥३७३॥

वैयाकरणसिद्धान्तः खलरीतिसमो मतः ।
अनयोः प्रत्यये जातेऽनुबन्धो लुप्यते यतः ॥३७४॥

प्राक् पादयोः पतति खादति पृष्ठमांसं
कर्णे तले तनु विरौति स्वनैर्विचित्रैः ।
छिद्रन्निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥३७५॥

विष्णुशर्मणः

अहो खलभुजङ्गस्य विपरीतो वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्विमुच्यते ॥३७६॥

आनन्दकरमिश्रस्य

खलैर्दृष्टा न जीवेयुर्नरा विषधरैरिव ।
पक्षपाती यदा न स्याद्गरुत्मानिव सज्जनः ॥३७७॥

तस्यैव

दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि वा ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥३७८॥

चाणक्यस्य

## अथ विरहवर्णनम्

याचे पावक तावकं पदयुगं नत्वा निबद्धाञ्जलि-
र्मा गर्वं कुरु सर्वथा मम समः को दाहकः स्यादिति ।
यूनोर्य्यो विरहः स चेत्पलमपि त्वां तावदालिङ्गति
त्वं जानासि परोऽपि कोऽपि विलसत्येतादृशो दाहकः ॥३७९॥

अपि लपितुमहन्न हन्त शक्त-
स्तव पुरतः परितापमायताक्ष्याः ।
शिव शिव रसना यतो न यत्ना-
दपि यतते निजदाहशङ्कयेव ॥३८०॥

पञ्चत्वं वपुरेतु भूतनिवहाः स्वांशे विशन्तु ध्रुवं
धातारं प्रणिपत्य नम्रशिरसा याचेऽहमेकं वरम्[1] ।
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गण-
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥३८१॥
[दाक्षिणात्यस्य[2]

वसन्ताग्नौ मग्ना चिरविरहखिन्ना सहचरी
यदि प्राणान्मुञ्चेत् तदिह वधभागी भवति कः ।
वयो वा स्नेहो वा कुसुमविशिखो वेति विमृशन्
तुहीति प्रव्यक्तं पिकनिकरझंकारमशृणोत्[3] ॥३८२॥

रे देहि देहि हृदये दलमम्बुजिन्या
रे सिञ्च सिञ्च वदनेन्दुमनिन्दितायाः ।
इत्येव दैववचनानि जनाननेभ्यो
युष्मत्पुरीपरिसरे परिशीलितानि ॥३८३॥

वार्त्ता कोऽपि न विश्रुता पथि मया रे पान्थ किं कथ्यता-
मेतत् किन्तु भवत्पुरीपरिसरेणागच्छता वीक्षितम् ।

१—'याचे त्वां द्रुहिण प्रणम्य शिरसा भूयोऽपि भूयान्ममे'ति शार्ङ्गधरपद्धतौ, पृ० ५००। २—'आकाशपोतेः' इति शार्ङ्गधरपद्धतौ। ३—पिकनिकरस्येति सदुक्तौ, पृ० १२५।

बाष्पव्याकुललोचनाः परिजनाः पौरा निरुद्धोत्सवाः
निःशेषोज्झितपल्लवाः क्षितिभुवो निष्पद्मिनीकं सरः ॥३८४॥

भवद्भुवनमागतं भ्रमितमीक्षितं नेक्षिता
कलामयकलावती कुतुकमेतदालोकितम् ।
विधुर्ज्वलति पल्लवे तलि(ड़ि?)दलिन्दमालम्बते
चलत्यचलयोस्तटे कमलयोश्च मुक्तावलिः ॥३८५॥

सखीकण्ठे दत्वा निजभुजलता पान्थवनिता
विवेश प्रासादं कथमपि सुधादीधितभयात् ।
अथालोच्य स्वीयं स्फटिकभुवि संक्रान्तवदनं
रुदन्ती साजस्रं सपदि वत मूर्च्छामुपययौ ॥३८६॥

रूपन्ते दृशि वाचि किं श्रुतिपुटे स्पर्शो निषक्तस्त्वचि
त्वं दूरेपि जहासि मे न हृदयं सौभाग्यमेतत्सताम् ।
धिग्मे कैतवबन्धुतां यदपृथग्भावं समक्षं गता
पक्ष्मणोरन्तर एव नाथ भवतश्चित्तेऽपि नाहं स्थिता ॥३८७॥

भूमिर्लग्ना तव चरणयोरित्यहन्तत्र सक्ती
त्वत्सम्पर्की वहति पवनस्तेन तञ्च स्पृशामि ।
त्वं कस्याश्चित्ककुभि सुभगे तेन मे दिक्षु चक्षु-
स्त्वद्विश्लिष्टे वपुषि नियतं धारणा दैवजैव ॥३८८॥

शोकोत्पत्तिरशोकतः सुमनसो यद्वैमनस्योदयो
वैरस्यञ्च रसालतो विकलता तावत्कलानां निधेः ।
अन्यत्किं नलदो भवत्यनलदो निर्णीतमुन्नीयते
वामः केवलमेक एव न भवांस्तस्यामशेषं जगत् ॥३८९॥

आलापो गृहतोऽपि नेत्रनटनं दूरादपि प्राङ्गणा-
दप्यास्याकलनं मनोभवरसोद्गारः समन्तादपि ।

एतस्मिन् बहुवाच्यता विलसितव्यस्ते जगन्मण्डले
यस्यास्ते प्रतिवेशिनी प्रियतमा मन्ये स धन्यो जनः ॥३६०॥

भवति हृदयबन्धो यूनि कस्मिन्न कस्या[1]
मम कमलदृशोस्याः काचिदन्यैव रीतिः ।
प्रबलपिशुनझंझामारुतेनापि धूतो
न भवति परिभूतो जातु यत्प्रेमदीपः ॥३६१॥

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽप्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्म्मलम् ।
स्त्रीत्वं धैर्य्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी
नो सख्यश्चतुराः कथन्नु विरहस्सोढव्य इत्थं मया[2] ॥३६२॥

शङ्कुकस्य[3]

प्रेमैव मास्तु यदि चेत्पथिकेन नैव
तेनैव चेद्गुणवता न समं कदापि ।
तेनापि चेद्भवतु माऽस्तु कदापि भङ्गो
भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः ॥३६३॥

इयं त्रियामा शतयामधारिणी
सुधाकरादग्निरुदेति सर्वतः ।
तनोति तापं मृदुचन्दनानिलो
विधौ विरुद्धे हि विपत् पदे पदे ॥३६४॥

पश्यन्तु द्रुमपल्लवाः कमलिनीपत्राणि पद्माकरे
राजन्तु प्रसरन्तु शैवललताः सख्यः सुखं शेरताम् ।
निःशङ्कं श्रियमर्जयन्निवसतु प्रेयान्विदेशे चिरं
प्राणानद्य निरङ्कुशो हरति मे श्रीखण्डशैलानिलः ॥३६५॥

---

१—'प्रभवति खलु यूनोः प्रेमबन्धो न कस्या' इति कपुस्तकपाठः । २—'शठः' इति कपुस्तकपाठः । ३—मयूरसूनोः शङ्कुकस्येति भाण्डागारे, पृ० २९८ शार्ङ्गधरपद्धतौ च, पृ० ५६४ ।

अन्तकाय ददता त्वया प्रिया
कायकाञ्चनलताप्रतिग्रहम् ।
दीयते बत मदीयजीवनं
दक्षिणानिल कुतो न दक्षिणा ॥३९६॥

महामहोपाध्यायजगन्नाथस्य

प्रियाया विरहे रामो बबन्ध सरिताम्पतिम् ।
अहं नयनजं वारि निरोद्धुमपि न क्षमः । ॥३९७॥

तस्यैव

अस्रं लोचनकोण एव कृपणद्रव्यायते सर्वदा
कण्ठे काकुवचः प्रसुप्तकमलक्रोडस्थभृङ्गायते ।
हा रावो हृदये वियोगिकुलजाकामाभिलाषायते
वैदेहीविरहज्वरो रघुपतेरापाकतापायते ॥३९८॥

अजनि प्रतिदिनमेषा
कर्दमशेषा मदङ्गसङ्गेन ।
प्रतिनिशमपूरि पम्पा
यदक्षिसम्पातिभिः सलिलैः ॥३९९॥

यासु यासु सरसीषु च रामो
निर्ममज्ज विरहानलतप्तः ।
तासु तासु हरिणा विहगा वा
नाददुः सपदि तप्तपयांसि ॥४००॥

कनकमृगमपास्य स्वां कुटीं संप्रविष्टः
कथमपि च वधूटीको ददर्शाङ्गणादौ ।
तदपि स रघुवीरः पर्णशालामुखान्त-
र्न विशति हृदयाशातन्तुनाशातिभीरुः ॥४०१॥

लग्ना कस्यां ककुभि सुभगे दृश्यते न त्वमेका
कुप्रस्तावे तव वरतनोस्तूयते न स्वभावः ।

कस्मिन्नाविर्भवति समये संस्मृतिस्तावकीना
वीणावाणी व्यथयति वृथा विप्रियो विप्रयोगः ॥४०२॥

पुरः पार्श्वे पश्चाद्विचरसि हठाद्गच्छसि बहि-
र्म्मया पृष्टा पृष्टा न किमपि ददासि प्रतिवचः ।
त्वमेवं तन्वङ्गि प्रतिदिनमुदासीनहृदया
मनो मे निर्लज्जं तदपि तव सङ्गं मृगयते ॥४०३॥

त्वद्विश्लेषावधि परिचिता चन्द्रिका चन्दनानां
यातः सातोदरि परिचयः शीलितं शीलमिन्दोः ।
आस्तान्तावच्चिरपरिचिता भाविता स्वप्नसिद्ध्यै
निद्रा साऽपि त्वमिव कठिने दुर्लभा लोचनस्य ॥४०४॥

तदीयविरहानलैर्नलिनचन्द्रकुन्दोल्लसन्-
मृणालहिमपल्लवाः सपदि शुष्कतामागताः ।
हरे हरिणलोचनाप्रबलतापसन्तापिता-
म्महीम्वहति दुर्वहां कथमसौ भुजङ्गाधिपः ॥४०५॥

हरे परेतभर्तुरस्य किंकरा भव-
त्प्रियां मनागपि स्पृशन्ति नैव हन्त दाहशङ्कया ।
तदङ्गसङ्गताभितापभूभृतिस्फुटं
सदा समुद्भवन्ति बुद्बुदा विलेशयेशमूर्द्धनि ॥४०६॥

लिखन्ती सर्वगात्राणि भित्तौ पत्युर्वियोगिनी ।
चरणौ न लिखत्येषा पुनर्गमनशङ्कया ॥४०७॥

तव विरहमसहमाना प्राणानबला विमुक्तवती ।
किन्तु तथाविधमङ्गं दुर्लभमिति ते न मुञ्चन्ति ॥४०८॥

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किञ्च त्वयि यदुपते मस्थिते प्रस्थितैव ।

अन्यद्ब्रूमः किमिह धमनी वर्तते वा न वेति
ज्ञातुं बाह्वोरहह वलयं पाणिमूलं प्रयाति ॥४०९॥

भानुमिश्रस्य

प्रेमाम्बुधौ स्वजनसङ्गममौक्तिकानां
प्रत्याशया बत मया निरमज्जि धातः ।
को वेद यत्प्रथममज्जन एव मे स्या-
द्देवं वियोगवडवानलमध्यपातः ॥४१०॥

रामदासशर्मणः

प्रिये गच्छामीति प्रियतमवचो वर्णघटना-
क्रमेणैव प्राणाः कुवलयदृशः पञ्च चलिताः ।
अमाङ्गल्यं माभूदिति च पुनरावृत्त्य सहसा
परावृत्ताः कण्ठे दधति किल दोलाचपलताम् ॥४११॥

शङ्करमिश्रोपाध्यायस्य

यामीति प्रियपृष्टायाः प्रियायाः कण्ठसंस्थयोः ।
वचोजीवितयोरासीत्पुरो निःसरणे रणः ॥४१२॥

कालिदासस्य

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानन्ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमन्नौ कृतान्तः ॥४१३॥

कालिदासस्य

तुहिनगिरितटीपटीरपङ्कैर्भवति यदा परिपूरितायतस्याम्(?) ।
प्रविशति यदि सा तथापि तावत्परितापोपशमो भवेन्न वाऽस्याः ॥४१४॥

कल्याणोपाध्यायस्य

## अथाभिसारिका

सौन्दर्यगर्विता

एकत्र कौलव्रतभङ्गशङ्का
विदग्धताभङ्गभयं परत्र ।
इत्याकुलानां कुलकामिनीनां[1]
गतागतेनैव गता त्रियामा ॥४१५॥

दक्षिणेन चरणेन लंघिता
देहली दयितया प्रियादरात् ।
वामपादमवलम्ब्य संशया-
दाकुलीभवति हा कुलीनता ॥४१६॥

बहिरुपनयति स्मरो गरीयान् स्थगयति चान्तरतः कुलं गरीयः ।
कृशतनुरनयोश्चिरं विरोधादधिगृहदेहलि यामिनीमनैषीत् ॥४१७॥

इह जगति रतीशप्रक्रियाकौशलिन्यः
कति कति न निशीथे सुभ्रुवः सञ्चरन्ति ।
मम तु विधिहताया जायमानस्मितायाः
सहचरि परिपन्थी हन्त दन्तांशुरेव ॥४१८॥

लालामिश्रस्य

## अथ कृष्णाभिसारिका

सितं वसनमर्पितं वपुषि नीलचोलभ्रमा-
न्मया मृगमदाशयान्मलयजद्रवः सेवितः ।
करेण परिबोधितः सुजनशङ्कया दुर्जनः
परं परमपुण्यतः सखि न लङ्घिता देहली ॥४१९॥

रतिदेवस्य

१—कुलनायिकानामित्यादर्शपुस्तके ।

## अथ ज्योत्स्नाभिसारिका

वपुर्म्मलयजद्रवैः सकलमेव सम्भावितं
शशिद्युतिसमन्ततो वसनमर्पितं दर्प्पतः।
कृतं बहुविधं पथि प्रणयिसङ्गमे साहसं
ग्रसिष्यति विधुन्तुदो विधुमिदन्तु जानीत कः ॥४२०।

नूपुरीयति पदे भुजङ्गमः
कञ्चुकीयति महत्तरन्तमः।
कुण्डलीयति तमालमञ्जरी
केलिकुञ्जगमनेन सुभ्रुवः ॥४२१॥

वसन्तमिश्रस्य

निष्पिष्याहिफणामणीन् सरभसं सन्तीर्य्य तास्ता नदीः
क्रान्त्वा कण्टकसङ्कटाश्च पदवीं ध्वान्ते घने वर्षति।
तल्पोपान्तमुपेत्य हन्त वनिता केनाप्यहो हेतुना
शय्यायास्त्वधिरोहणे प्रियकरालम्बं किलापेक्षते ॥४२२॥

चतुर्भुजरायस्य

गगने बहुगर्जति वारिधरे परिसर्प्पति सर्प्पफणानिकरे
परिवल्गति रक्षिजनप्रचुरे तमसा परिलुप्तदिशः प्रकरे।
भवनादनुरागवशादनया नवकञ्जविलोकनया चलितं
करुणावरुणालय ते तपसस्तरुणागुरुणा सहसा फलितम् ॥४२३॥

पल्लीसं०कृष्णपत्युपाध्यायस्य

कृशापि कलिता मया कुटिलवर्त्तिनी विद्युता
पदा[redacted]परिष्वितः पुनः परमपीवरः पन्नगः।
अवीक्षितमपीक्षितं सपदि तत्तमो वीक्षितं
तथापि न परीक्षितं सुभग तावकीनं मनः ॥४२४॥

लज्जैवोद्घटिता किमत्र कुलिशोद्भिद्धा[1] कपाटस्थली
मर्यादैव विलङ्घिता सखि पुनः केयं कलिन्दात्मजा ।
आक्षिप्ता खलदृष्टिरेव कियती व्यालावली वा पुनः
प्राणा एव समर्पिताः सखि पुनस्तस्मै किमेषा तनुः ॥४२५॥

चित्रस्थानपि या विलोक्य फणिनः कम्पं समासादय-
त्येकाकिन्यपि जातु यातु सहसा नो याति वाटीमपि ।
सैवाहो विषमे फणाभृति पदं विन्यस्य निःसाध्वसं
कान्तारेऽतितमोमयेऽभिरसति स्नेहस्य किन्दुष्करम् ॥४२६॥

या केलिच्युतकेशपुष्पविषमां शय्यान्न सेहे पुरा
या जालान्तरसंगतार्ककिरणद्योतादपि म्लायते ।
सेयं निष्ठुरकाष्ठसञ्चितचितां ज्वालाकरालानलां
स्मेरास्या सुमुखी प्रियस्य भजते स्नेहस्य किन्दुष्करम्[2] ॥४२७॥

श्यामा भीमा सरणिरसमा वारिदा वारिलग्नाः
कल्लोलिन्यः कुपथचलिताः पन्नगाः पादमृष्टाः ।
त्वत्सम्पर्कात्स्वयमपि विसस्मार जानाति नान्यः
कस्ते ब्रूयात्सपदि मथुरानाथ तत्साहसानि ॥४२८॥

विद्यानिधेः

सरणावभिसारसाहसिन्याः
कमलाक्ष्याः पदपङ्कजाभिमृष्टाः ।
अपुरापरिचीयमानसौख्या-
दधिनिद्रा भुजगाधिपा बभूवुः ॥४२९॥

कल्याणोपाध्यायस्य

आवृणोति विवृणोति पाणिना गच्छतोध्वफणिनः शिरोमणिम् ।
आत्मगोपनपथावलोकनव्यग्रतामुपगताभिसारिका ॥४३०॥

रामचन्द्रमिश्रस्य

१—उद्भिन्नेति भाण्डागारपाठः । २—इयन्तु नाभिसारिका ।

धरा विषधरावरैः श्रवणभैरवैः स्फूत्कृता
हरित्त्वदिर(?)मेदुरा तिमिरदन्तुरा तामसी[1]।
अपि स्वलिखितोरगं नहि समीक्ष्यते या भिया
तदानयनहेतवे मकरकेतवे ते नमः ॥४३१॥

परिसर्पति सर्पगणे सरणौ चरणौ विनिधाय फणानिकरे
विपिनाभिमुखी चलिता विदुषी परितः परिगर्जति वारिधरे।
तदिह व्रजनाथ विधेहि तथा पुनरेति यथा रमणावसरे
निपुणोऽसि यदि स्वयमेव तथाऽलमिदं कथयामि तथापि हरे ॥४३२॥

गङ्गानन्दोपाध्यायस्य

## अथ स्वयन्दौत्यम्

अत्रायातं पथिक भवता कर्म्मणाकारि पथ्यं
तथ्यं ब्रूमः पुनरपि सखे साहसं मा विधासीः।
वामाक्षीणां नयननलिनप्रान्तनिर्धूतधैर्य्याः
स्वां मर्य्यादामिह हि नगरे योगिनोऽपि त्यजन्ति ॥४३३॥

पन्थाः पान्थ नखायुधैः परिवृतो यातो रविर्व्वारुणीं[2]
त्यक्त्वा द्वीपवती च नाविकजनैर्दूरान्तरं प्रान्तरे।
एकाकिन्यहमस्मि शून्यशयने देशान्तरे मे पतिः
श्वश्रूः काशसमाकुलान्धबधिरा वासोऽन्यतश्चिन्त्यताम् ॥४३४॥

पथिक त्वमप्यवाच्यो निवससि सायं पयोधरं[3] दृष्ट्वा।
दूरे पतिरहमेका कथमथ भवतु प्रियातिथ्यम् ॥४३५॥

अनायत्ता भृत्याः कथमपि न पश्यन्ति वसतिं
ननन्दा मे मन्दा कलहकलिता त्यक्तभवना।
अकर्णाक्षिश्वश्रूः परमहमिहैकास्मि सदने
विदेशे प्राणेशे पथिक कथनीयं मम वचः ॥४३६॥

---

१—रात्रिः। २—प्रतीचीं दिशम्। ३—मेघम्, पक्षे स्तनम्।

रे पान्थ पुस्तककर क्षणमत्र तिष्ठ·
वैद्योऽसि किं गणकशास्त्रविशारदोऽसि ।
केनौषधेन मम पश्यति भर्तुरम्बा[1]
केनागमिष्यति पतिस्त्वचिरप्रवासी ॥४३७॥

वाणिज्येन गतः स मे गृहपतिर्वार्तापि न श्रूयते
प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता ।
बालाहं नवयौवना निशि कथं स्थातव्यमेकाकिनी
सायं सम्प्रति वर्त्तते पथिक हे स्थानान्तरं गम्यताम् ॥४३८॥

शृङ्गारतिलकस्य

कस्येयं तरुणि प्रपा[2] पथिक नः किं पीयतेऽस्यां पयो[3]
धेनूनामथ माहिषं पथिक रे वारः[4] कथं मङ्गलः ।
सोमो वाऽथ शनैश्चरोऽमृतमिदं[5] यत्तेऽधरे दृश्यते
श्रीमत्पान्थ विलाससुन्दर सखे यद्रोचते तत्पिब ॥४३९॥

अतनु[6]ज्वरपीडितासि बाले
तव तोषाय मतो ममोपवासः[7] ।
रस[8]मर्प्पय वैद्यराज नाहं
भवदावेदितलङ्घने[9] समर्था ॥४४०॥

मध्याह्नप्रहरे[10] निदाघसमये तापो महान्[11] वर्त्तते
ह्यस्मिन्खर्ववटे सुशीतलतटे रे[12] पान्थ विश्राम्यताम् ।
नाथस्ते क्व गतो विदूरगमनः सेयं जराजर्जरा
तन्माता बधिरा विनष्टनयना मा भीतिमात्रं कुरु[13] ॥४४१॥

१—नक्तमम्बेति कपुस्तकपाठः । २—पानीयशालिका । ३—जलम्, पक्षे क्षीरम् । ४—जलानि, पक्षे सोमादिदिनम् । ५—जलम्, पक्षे अमृतम् । ६—महान्, पक्षे कामः । ७—लङ्घनम्, पक्षे समीपवसतिः । ८—रसायनम्, पक्षे प्रीतिम् । ९—उपवासे, पक्षे उल्लङ्घने । १०—'मध्याह्नेऽतिखरे' इति भाण्डागारपाठः, पृ० ३५५ । ११—'अध्वनः' इति भाण्डागारे । १२—'शीते कुञ्जतटे विचित्रविटपे भो' इति भाण्डागारे ।

१३—एकाकी च भवानहं च तरुणी शून्या प्रपा वर्त्तते ।
लब्धेऽहं युवती स्वयं च चतुरो जानासि कालोचितमिति भाण्डागारपाठः ।

नौरियमकर्णधारा
दुस्तरतारा तरङ्गिणी विषमा ।
रविरस्ताचलचुम्बी
सङ्कटपतितोऽसि रे पान्थ ॥४४२॥

इयं सुरतरङ्गिणी[1] न पुनरत्र नौ-सङ्गमो[2]
भवेत्तरणिमज्जनं पथिक माऽत्र भीतिं भज ।
निधाय हृदि निर्भरं[3] विपुलचारुकुम्भद्वयं
घनवृघनघनागमे घनरसस्य[4] पारं व्रज ॥४४३॥

जगन्नाथोपाध्यायस्य

वाच्योऽतिथे प्रान्तपथे पतिर्मे बालाहमेका विपदस्त्वनेकाः ।
सेव्या कथम्वा पलिते[5] यमम्बा प्रश्नेऽपि वामाः प्रतिवेशिरामाः[6] ॥४४४॥

मानं मानिनि मा विमुञ्च विदुषि ब्रूयाः क एष क्रमो
यद्रागः श्रुतिगामिनोर्नयनयोरेतादृशो दृश्यते ।
अन्यत्किं कुचशम्भुसेवनपरे बद्धः कथं कञ्चुके
काञ्चीसन्निधिसंस्थितापि लभते नीवो न मुक्तिं कुतः ॥४४५॥

हरिहरोपाध्यायस्य

खेलत्खञ्जनगर्वगञ्जनदृशा त्वं पश्य मा पश्य वा
वीणारावविरोधिसुन्दरवचस्त्वं ब्रूहि मा ब्रूहि वा ।
वारं वारमदूरसम्मुखगता यातं कृतञ्चेत्त्वया
तेनैव द्विरदेन्दुमन्दगमने सोऽर्थी कृतार्थी कृतः ॥४४६॥

आनन्दकरमिश्रस्य

उचितगोपनमनयोः स्तनयोः कनकाद्रिकान्तितस्करयोः ।
अवधीरितविधुमण्डलमुखमण्डलगोपनङ्किमिति ॥४४७॥

१—सुराणां तरङ्गिणी नदी; पक्षे सुरतस्य रङ्गिणी । २—नावस्य सङ्गमः, पक्षे 'नौ' आवयोः सङ्गमः । ३—घटद्वयं, पक्षे स्तनद्वयम् । ४—घनस्य मेघस्य रसो जलं तस्य; पक्षे घनो निविडो यो रसस्तस्येति भावः । ५—वृद्धेति यावत् । ६—प्रतिवेशिन्यः स्त्रियः ।

तत्साधु साधु सरसीरुहलोचने य-
च्चेलाञ्चलेन कुचमण्डलमावृणोषि ।
श्यामाननस्य कठिनस्य वियोगिवक्षो-
विक्षोभिनो हि मुखमुद्रणमेव युक्तम् ॥४४८॥

उच्चैस्तनन्तमभिगम्य घनं तवाह-[1]
मभ्यागतोऽस्म्यतिथिरेष पयोधरार्थी ।
वक्तुं त्रपा तदपि वच्मि विदूरबन्धोः
काठिन्यमस्ति च पयोधरयोर्ममापि ॥४४९॥

रघुदेवमिश्राख्यश्रुतिधरस्य

## अथ खण्डितोक्तिः

किं किं वक्त्रमुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क्व ते
वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्वञ्चसे[2] ।
खिन्नाहं तव रात्रिजागरवशात्तामेव याहि प्रियां
निर्म्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥४५०॥

दिने नयनगोचरो दिनपतेऽस्तु तुभ्यन्नमः
प्रभातसमयागतस्तरुणभूषितो रागवान् ।
विहाय निजवल्लभां कमलिनीं निशायां सदा
त्वमन्यगतिकां सदा व्रजसि कुत्र तत्त्वं वद ॥४५१॥

श्रीविद्याकरमिश्रस्य

अन्या या वसनोत्तमं तदधुना संगृह्य माऽन्यं पुन-
र्यन्मां दर्शयसि — प्रियतमं तोषाय रोषाय नो ।
सर्वस्यैव सतश्च रीतिरियती पूर्वं श्रुता वृद्धतः
प्रायः प्राप्य निजप्रकर्षमखिलं मित्रं मुदादर्शयत् ॥४५२॥

तस्यैव

---

१—समन्तादिति कपुस्तकपाठः । २—वाग्बन्धनैरिति [illegible], पृ० २२४ ।

## अथ चन्द्रवर्णनम्

किं यूनां मृगनाभिलुप्तमणुभिः(?) कर्प्पूरपङ्काचरै-
र्व्योमाज्ञापनपत्रमत्रपरताशक्त्यै स्मरः प्राहिणोत् ।
अन्तर्लाञ्छनकल्पितागुरुमतस्तन्नामवर्णाङ्किता
यत्रायं घनचन्दनद्रवमयी मुद्रा समुद्रात्मजः ॥४५३॥

वासवीयहरिदङ्कविटङ्कादाजगाम महिमधाम कपोतः ।
व्योमचत्वरमतित्वरशिखाण्यक्षतानि समुदीक्ष्य बुभुक्षुः ॥४५४॥

षाण्मासकस्य

नाकनायकनिकेतनायिकाकेलिपानकनकैकभाजनम् ।
मन्दमन्दमुदयन्तमम्बरादिन्दुमिन्दुमुखि किन्न पश्यसि ॥४५५॥

अयमहो रजनीचरकेसरी गिरिदरीशयनात्सहसोत्थितः ।
तिमिरवारणकुम्भविदारणोच्छलितरक्तभरैरिव लोहितः ॥४५६॥

लक्षिमाठक्कुराज्ञ्याः

दशशताचकचकुन्दलनिसृतः[1] किरणकेसरभासुरपिञ्जरः ।
तिमिरवारणयूथविदारणः समुदियात्व(?)दयाचलकेसरी ॥४५७॥

व्यासस्य

## अथ नानाप्रकारश्रृङ्गाररसपद्यानि

तरिरियमतिजीर्णा कर्णधारोऽपि गोपः
सरिदति च गभीरा भानुमानल्पभानुः ।
अहमपि च कुलीना बन्धुहीना नवीना
शिव शिव कथमस्याः पारमासादयामि ॥४५८॥

जीर्णा तरिः सरिदतीव गभीरनीरा
बाला वयं सकलमित्थमनर्थहेतुः ।

---

१—प्राचीदिग्वलनिसृतः ।

विश्वासबीजमिदमेव कृशोदरीणां
यन्माधव त्वमसि सम्प्रति कर्णधारः ॥४५९॥

पण्यं देहि तरेः परेऽहनि हरे दास्यामि चेलाञ्चलम्
मुञ्च प्राञ्चति सायमायतदृशामेतादृशी वञ्चना ।
इत्यालापकलाविलासविलसत्कम्पं कुरङ्गीदृशो
नीवी विस्खलिता बभूव फलितायासो यशोदात्मजः ॥४६०॥

मुञ्चाञ्चलं चञ्चल पश्य लोकं
बालोऽसि नालोकयसे कलङ्कम् ।
भावञ्च जानासि विलासिनीनां
गोपाल गोपालनपण्डितोऽसि ॥४६१॥

माधव मधुरवचोभि-
स्तावकतरणिर्मयारूढा ।
मध्येयमुनमिदानी-
मनुचितवाणीमुदाहरसि ॥४६२॥

हारमावहसि पारतारणे नैव तत्र विनिवार्यते मया ।
नीविकां कुसुमबाणजीवकां गोप मोचयसि किञ्च लज्जसे ॥४६३॥

नन्दनन्दन कलिन्दनन्दिनी-
पारपण्यकरमन्यमर्पय ।
कुङ्कुमं त्यज न तक्रविक्रये
दीयतेऽधरसुधारसः क्वचित् ॥४६४॥

नन्दनन्दन कलिन्दनन्दिनीपारतारणविधानवेतनम् ।
पञ्च वा षडथ वा वराटिकां नीविबन्धनविमोचनेऽसि कः ॥४६५॥

अश्रुतमिव खलजल्पितमदृष्टमिव गुरुमुखेन्दुमालिन्यम् ।
अगणितनिजापमानं भामिनि भवदर्थमच्युतः सहते ॥४६६॥

सर्व्वतः पुरत एव दृश्यते पात्रता न पुनरेति चक्षुषोः ।
हृद्गतोऽपि भुजयोर्न भाजनं कोऽयमालि वनमालिनः क्रमः ॥४६७॥

पूर्वजन्मनि चिराय सञ्चितं राधिके कथय कीदृशन्तपः ।
एष यन्नयनकोणकौशलात्सेवकोभवति देवकीसुतः ॥४६८॥

अमुनैव पथागतागतं कृतवानद्य मनोहरो हरिः ।
सखि दुर्ज्जनभीतया मया हतया हन्त चिरन्न वीक्षितः ॥४६९॥

मुरलीरवमाधुरीभरेण
स्फुरता चारुविलोचनाञ्चलेन ।
पथि यो न गतिं ददाति मातः
स गतिन्दास्यति किं ब्रवीति वेदः ॥४७०॥

अमी पुरस्थाः सकलाः सुनिद्रिता न नूपुरं मुञ्च सुखेन यास्यसि ।
व्रजत्यपि श्रीपतिरङ्घ्रिमाश्रितं हरे तवाख्यातिरियं भविष्यति ॥४७१॥

नन्द वैपणिकपण्यवीथिकां यामि किन्तव कृते समानये ।
नीलमुज्ज्वलगुणं समानये केशवं धनमनुत्तमं सखि ॥४७२॥

अयि दुर्जनगर्जितेन किं सरले नम्रमुखी विषीदसि त्वम् ।
परिपन्थिनि देवकीसुते परिवादोऽपि तपोभिरुन्नतैः ॥४७३॥

रमयति कामपि दयितां मम विस्मरतीति न मे सन्तापः ।
च्यवते यदच्युतोऽसौ प्रियसखि तदयं परीतापः ॥४७४॥

उज्झिताऽहमिति वत्स न ब्रूये राघवेण कुलदूषणभीत्या ।
का त्वमित्यभिहिते वत वन्यान् श्रावये किमिति मुह्यति चेतः[1] ॥४७५॥

यदा मुकुन्दोऽजनि नन्दगेहे नवीननीलाम्बुजतुल्यदेहः ।
तदैव जाने विधिना निबद्धो राधाललाटे कुलटापवादः ॥४७६॥

१—लक्ष्मणं प्रति सीतोक्तिः ।

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नतारापतिमण्डलाग्रणीः ।
वियोगिरामातुरदृष्टिवीक्षितो
वसन्तकालो हनुमानिवागतः ॥४७७॥

भट्टबीजकस्य

निन्दतु नाम ननन्दा हसतु सपत्नी पतिस्त्यजतु ।
उच्चैरिदम्वदामो मम सखि दामोदरः सकलम् ॥४७८॥

खण्डवलासं॰कृष्णानन्दठक्कुरस्य

कोपं गोपनृपः करोतु नितरां निन्दन्तु सामाजिका
जल्पन्तु प्रतिमन्दिरं कलुषिता वृद्धा विरुद्धाक्षरम् ।
नासादत्तकराङ्गुलीकमधिकव्यानर्त्तितभ्रूस्त्रियो
धन्यं धन्यमुदीरयन्तु मम तु प्राणाधिका राधिका ॥४७९॥

उपाध्यायपदांकितपञ्जीकारस्य

अविदितसुखदुःखं निर्गुणं वस्तु किञ्चि-
ज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे ।
मम तु मतमनङ्गस्मेरतारुण्यघूर्णन्-
मदकलमदिराक्ष्या नीविमोक्षो हि मोक्षः ॥४८०॥

दिशि दिशि परिहासगूढगर्भाः
पिशुनगिरो गुरुगञ्जनञ्च तादृक् ।
सहचरि हरये निवेदनीयं
भवदनुरागवशादयं विपाकः ॥४८१॥

अज्ञास्तरन्ति पारं
विज्ञा विज्ञाय द्राङ्निमज्जन्ति ।
कथय कलावति केयं
तव नयनतरङ्गिणीरीतिः ॥४८२॥

उमानाथपण्डितस्य

शातोदरि किं गायसि
हितमहितमेव जानासि ।
अङ्के प्रच्युतहरिणो
मिहिकाकिरणो मुखं तुलति ॥४८३॥

यद्यपि का नो हानिः
परकीयाञ्चरति रासभे द्राक्षाम् ।
असमञ्जसमिति मत्वा
तथाऽपि परितप्यते चेतः ॥४८४॥

रामदासोपाध्यायस्य

भवतामहमिव बहवो
मम तु भवानिव भवानेव ।
कति कुमुदिनीवनानि विधो-
र्विधुरिव विधुरेव कुमुदिन्याः ॥४८५॥

कामिनीनयनकज्जलपङ्कादुत्थितो मदनमत्तवराहः ।
कामिमानसवनान्तरचारी मूलमुत्खनति मानलतायाः ॥४८६॥

शङ्करमिश्रवाचस्पतिमिश्रयोः[1]

आनम्रास्याः पिहितवदना चित्तमध्ये निरीक्ष्ये
मानारम्भः सुमुखि सफलो मामकीनः कथं स्यात् ।
यस्यां यस्यान्दिशि दिशि मुखं मानतोऽहन्नयामि
तस्यान्तस्यां सजलजलदश्यामलो नन्दसूनुः ॥४८७॥

अम्बरमपनय
व्रजतु विकाशं दिगम्बरता ।
हारावलिसुरतटिनी
नखशशिमण्डलस्य कुचशम्भोः ॥४८८॥

१—एष खलु द्वितीयो वाचस्पतिमिश्रः शङ्करमिश्रसमकालीनः भामतीकारादन्यः ।

तया वनितया किम्वा किम्वा कवितया तया ।
पदविन्यासमात्रेण न या हरति मानसम् ॥४८९॥

दरफुल्लकमलकाननसौरभसंभारमन्थरः पवनः ।
दयितोरसि शयितामपि दयितामभितापयाञ्चक्रे ॥४९०॥

षाण्मासिकस्य

मानं मुञ्च विधेहि किञ्च करुणां चेत्सापराधोऽस्मि ते
वध्वा दोर्लतया कटाक्षविशिखैर्मा निष्कृपं कृन्तय ।
मूर्च्छापन्नजने पुनः सकरुणे दत्वाऽधरीयामृतं
स्पर्शं कारय वारिजाक्षि सततं वक्षोजशम्भोः शतम् ॥४९१॥

विरमति कथनम्विना न खेदः
सति कथने समुपैति कापि लज्जा ।
इति कलहमधोमुखी-सखिभ्यो
लपितुमनालपितुं समाचकाङ्क्ष ॥४९२॥

मनो बद्धो दत्तं प्रियतम मनोमूल्यवसुने
स्मरः साक्षी लब्ध्वा प्रतिदिनमहो नूतनवयः ।
न लब्धं तद्वित्तं निजमपि गतं हन्त किमभू-
दयं साक्षी कस्मान्निरुपधि वृथा मां व्यथयति ॥४९३॥

तल्पे पल्लवकल्पिते कमलिनीपत्रातपत्रावृते
क्लृप्तान्योन्यभुजोपधानसुभगं विश्रान्तयोरावयोः ।
सम्बोध्यस्सखि माधवो मम गिरा किम्वर्त्तते वा न वा
तत्रे चेतसि वेतसीवनघनच्छायासु निद्रायितम् ॥४९४॥

रचयति गुरुवर्गे मार्गखेदापनोदं
घनपवनवितानैरम्बुताम्बूलदानैः ।
उपगतमतिदूरात्केवलं कान्तमारा-
दुपचरति वधूटी दृक्पुटीपाटवेन ॥४९५॥

स्वर्णावदातद्युतिकायकाण्डे सम्पूर्णपीयूषमयूखमुख्यः ।
एणीदृशः पृष्ठविलम्बवेणी विम्बः पुरो राजति रोमराजी ॥४९६॥

श्रोणीचारुरथं पयोधरहयं भ्रूकार्मुकं दृक्शरं
कामोद्दीपनमङ्गराजकवचं कान्ताधरौष्ठध्वजम् ।
काञ्चीनूपुरचारुदुन्दुभिवरं हूँकारदानान्वितं
कामिन्या नखदन्तमस्त्रमतुलं प्राप्नोति युद्धं पुमान् ॥४९७॥

शान्ते मन्मथसंगरे रणभृतां सत्कारमातन्वती
वासोऽदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम् ।
बिम्बौष्ठस्य च वीटिकां सुवदना पाण्यो रणत्कङ्कणे
पृष्ठालम्बिनि केशपाशनिचये युक्तो हि बन्धक्रमः ॥४९८॥

कवीन्द्रस्य

विषमशरोऽयं कामः कुरुते बाधां न तच्चित्रम् ।
जीवनदोऽपि विचित्रं जीवनमस्माकमाहरति ॥४९९॥

कलंकी निःशङ्कं परितपतु शीतद्युतिरसौ
भुजङ्गव्यासङ्गी वमतु गरलं चन्दनरसः ।
स्वयं दग्धो दाहं वितरतु मनोभूरपि भृशं
जगत्प्राण प्राणानपहरसि किन्ते समुचितम् ॥५००॥

जटा नेयं वेणी कृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या[1] कुसुमशर किं मां व्यथयसि[2] ॥५०१॥

सुरभिदि[3] परपुंसि[4] प्रेमबन्धो निषिद्ध-
स्त्वमपि सखि किमेवम्वारयन्ती ब्रवीषि ।

१—शिवः । २—प्रहरसीति पाठान्तरम् । ३—कृष्णे इति यावत् । ४—परमे पुरुषे, पक्षे पुरुषान्तरे ।

अनधिगतयशोदानन्दनभ्रूविलासाः
कृतविविधविकल्पास्ता यदूचुस्तदूचुः ॥५०२॥

कल्याणोपाध्यायस्य

कनकाचलजित्वर[1]स्तनीनां
रमणीनां खलु यत्र सन्निवेशः ।
मनसः परमाणुतां वदन्तः
कथमद्यापि न तार्किकास्त्रपन्ते ॥५०३॥

तस्यैव

मुरहर रन्धनसमये
मा रव मुरलीमहो मधुराम् ।
नीरसमेधो रसतरतां
कृशतरतां कृशानुरभ्येति ॥५०४॥

तस्यैव

नाथ विलोकय मेघं[2]
पापं क्व तवास्ति कृतपुण्यायाः ।
ननु कथयामि पयोधर[3]-
मपनय कुचकञ्चुकीमुरस्थाम्[4] ॥५०५॥

बाला या नवसङ्गमे निपुणतां दृष्ट्वाऽन्यथा शङ्कितं
पत्युश्चित्तमवेक्ष्य पङ्कजमुखी तत्पार्श्वकुड्येऽलिखत् ।
एकं मत्तमतङ्गजं तदुपरि क्रोधात्पतन्तं शिशुं
सिंहीगर्भविनिःसृतार्धवपुषं दृष्ट्वा स हृष्टोऽभवत् ॥५०६॥

तडिल्लेखा नैषा चिरतरचमत्कारचतुरा
लतेयं सौवर्णी नहि नयनविन्यासकुशला ।

१—जयनशीलः । २—घनं, पक्षे मे अघम् (पापम्) । ३—मेघम्, पक्षे स्तनम् ।
४—'नाथ विलोकय मेघं नहि नहि पापं तवातिपुण्यायाः ।
नहि कथयामि पयोधरमपसारय कञ्चुकीमुरसः'—इति भावशागारे, पृ० १५६ ।

न वा चित्रं स्पन्दैस्तदिह परिशेषादवगता
तपोरेखा केषामतिसुभगवेषा विजयते ॥५०७॥

लसद्भ्रूलावण्या जितजलधिकन्यातनुरुचिः
सुधास्रोतोवन्या मृदुवचनविन्यासकुशला ।
अये केयं हास्यामृतवलितलास्या विजयते
सरोजास्या कस्याप्यभिनवतपस्या परिणतिः ॥५०८॥

नेत्रे पङ्कजतुल्यत्वं वदन्ति कवयो वृथा ।
यस्य संयोगमात्रेण जायते विरहानलः ॥५०९॥

श्रीविद्याकरमिश्रस्य[1]

अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः
कलङ्केनाश्लिष्टो न खलु परिभूतो दिनकृता ।
कुहूभिर्नो लुप्तो न च युवतिवक्त्रेण तुलितः[2]
कलानाथः कोऽयं कनकलतिकायामुदयते ॥५१०॥

करे वेणीमेणीसदृशनयना स्नानविरतौ
दधाना हर्म्यान्ते हरनयनतेजोहुतमपि ।
इयं मुग्धा दुग्धाम्बुधिबहलकल्लोलसदृशा
दृशा वारम्वारं मनसिजतरुं पल्लवयति ॥५११॥

चलन्तीनां सौधे चपलनयनानान्तनुरुहे
गवाक्षान्तर्वाताः कतिचन गृहीत्वा जलमुचः ।
क्षणं गोपायन्ति क्षणरुचिमिषेण क्षणमथो
वितन्वन्ति स्वर्णं करगतमिवाकिञ्चनजनाः ॥५१२॥

साकूतनूतनकुचापहृतांशुकान्ते
कान्ते कथञ्चिदपि कुञ्चितकन्धरायाः ।
एणीकिशोरकदृशोऽमृतसिन्धुवीची-
र्वीचीचकार सविकारनकारभङ्गिः ॥५१३॥

१—अयमेव प्रायः संग्रहस्यास्य कर्ता । २—'विजितः' इति भाण्डागारपाठः, पृ० २७५ ।

दन्ते गौडाङ्गनानां जनकजनपदस्थायिनीनां कटाक्षे
तैलङ्गीनां नितम्बे सुललितजघने चोत्कलप्रेयसीनाम् ।
व्याहारे माथुरीणां सघनघनरुचौ केरलीकेशपाशे
कार्णाटीनां कपोले[1] स्फुरति रतिपतिर्गुर्जरीणां कुचेषु ॥५१४॥

चक्रीकृतभुजलतिकं
वक्रीकृतमुख[2]मुन्नतग्रीवम् ।
नो हरति कस्य हृदयं
हरिणदृशो जृम्भणारम्भः ॥५१५॥

मनीषिताः सन्ति गृहेषु देवताः
तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥५१६॥

कालिदासस्य

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या पुनर्गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणी स्थानानि रक्षिष्यति ॥५१७॥

अचलमिश्रस्य[3]

अयं कनक[4]निर्मितः सकलभूधरादुन्नतः
सहस्रनयनाश्रयः सपदि लब्धभाग्योदयः[5] ।
कुचोपरि परिस्फुरत्तरुणिचारुचेलाञ्चलं[6]
मनागपि निवारय त्यजतु गर्वमुर्वीधरः ॥५१८॥

परशुराममिश्रस्य

---

१—कटौ चेति कपुस्तकपाठः। २—मध्यमिति आदर्शपुस्तके। ३—'पाणिनेः' इति सदुक्तौ, पृ० १७७। ४—कमलेति कपुस्तकपाठः। ५—'कामोदयः' इति कपुस्तकपाठः। ६—चोलाञ्चलमिति कपुस्तकपाठः।

सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं
चेतः कान्तसमीहितावधि महामानोऽपि मौनावधि ।
हास्यञ्चाधरपल्लवावधि पदन्यासावधि
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् ॥५१९॥

भानुनाथस्य

एकेन प्रियसाक्षिणा जितवती वीणामुचोभिर्निजै-
र्गत्या मन्दिर एव विश्वगमनं हंसं जिगायाचिरात् ।
वक्त्रेण द्वयमोदिनेन्दुमजयत्सर्वप्रमोदप्रदं
दृष्ट्या लक्ष्यपदाप्रयेव दलयत्यम्भोरुहाणां मदम् ॥५२०॥

चित्रधरोपाध्यायस्य

मामुद्वीक्ष्य समागतं गुरुजनत्रासेन सैव प्रिया
नोत्तस्थौ न चकार वाग्विरचनां विज्ञाकथासन्निधौ ।
किन्त्वस्याः सहजावगुण्ठनपटप्रान्तेषु कान्तेक्षणं
जातं पञ्जरखञ्जरीटसदृशोद्वेगव्यथाकारकम् ॥५२१॥

बाले नाथ विमुञ्च मां प्रतिरुषं क्रोधान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥५२२॥

अमरुकवेः[1]

कृशोदरि निशा कृशा तदपि ते न मानः कृशः
पुरोदिगनुरागिणी तदपि नानुरागोदयः ।
रटन्ति चरणायुधास्तदपि मौनमालम्बसे
प्रसन्नमिदमम्बरं तदपि न प्रसन्नं मनः ॥५२३॥

चन्द्र स्वैरं विहर गगने प्रेयसी नम्रवक्त्रा
वक्त्राम्भोजप्रसरसहसा मीलिताक्षी मृगाक्षी ।

१—भट्टकुमारस्येति भाण्डागारे, पृ० ३२४ ।

उक्तिं मुक्ताङ्कुरु पिक निजां मौनमास्ते यदैषा[1]
युष्मद्वाग्भिः फलितमनया यद्गृहीतोऽयमानः ॥५२४॥

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यसे
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥५२५॥

अमरुकवेः

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं मुग्धाननं जायते ।
कार्कश्यङ्गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥५२६॥

अमरुकवेः[2]

जागर्ति लोको ज्वलति प्रदीपः
सखीजनः पश्यति कौतुकेन ।
क्षणैकमात्रं कुरु धीर धैर्यं
बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥५२७॥

लखिमाठकुराज्ञ्याः

कितव न मयि तव दोषः
प्रणयाप्रणयादिकारणं कालः ।
छाया प्रिया निदाघे
शिशिरे सैवाप्रिया भवति ॥५२८॥

लखिमाठकुराज्ञ्याः

बाले विश्रामकाले तव वदनविधौ कान्तिपानीयपूरे
मज्जन्मे नेत्रयुग्मं कुचकलशसमालम्बनं प्राप्य तस्थौ ।

१—मौनहारियदैवेति कपुस्तकपाठः । २—'भदन्तवर्मणः' इति मायडागारे, पृ० १७५, शार्ङ्गधरपद्धतौ च, पृ० ५१२ ।

तस्मान्नाभीह्रदान्तं सुललितत्रिवलीभ्रान्तकान्त्या लसन्तं
दूरादालोक्य भीतं द्वयमपि कलशं नैव हातुं शशाक ॥५२६॥

लखिमाठक्कुराज्ञ्याः

काञ्चीदाम दृढं विधाय कवरीमाबध्य गाढं गुणै-
र्वक्षोजादपसार्य्य हारमसकृद्व्याधूय कर्णोत्पलम् ।
दूरोत्सारितकङ्कणा विधुमुखी सोत्प्रासहासं हठा-
त्कण्ठे कस्य करोति हन्त दयिताश्लेषाय दोर्बन्धनम् ॥५३०॥

मामालोक्य पराङ्मुखी विधुमुखी हासोन्मुखी सम्मुखी
भावे यद्विमुखी कथोन्मुखमुखी यानोन्मुखी च क्षणम् ।
केलीसद्मनि देहलीमुपगता विद्युल्लतामत्कर-
स्पर्शे किङ्किणिकङ्कणक्वणझणत्कारः कदा धास्यते ॥५३१॥

अमुष्यां संक्रान्तौ[1] तव तरुणि तारुण्यतरणौ[2]
स्मरो दाता देवस्त्रिवलितटिनीतीरनिकटे ।
अमू ते वक्षोजौ सखि सुघटितौ हाटक[3]घटौ
महादानं कस्मै वद भवतु सारङ्गनयने ॥५३२॥

लक्ष्मीनाथस्य

दूरादम्बरडम्बरेण बहलालङ्कारभारेण च
त्वं रे पामरि नागरस्य हृदयं हर्तुं किमाकाङ्क्षसि ।
मुग्धे कामकलाविलासरसिकः कान्तो ययाकृष्यते
सा भिन्नैव रमा जगत्यनुपमा जागर्त्ति वामभ्रुवाम् ॥५३३॥

अविभ्रमालोकनदुर्भगानि
अव्यक्तवक्षस्तनमण्डलानि ।
अङ्गानि रे पामरनागरीणा-
मपुण्यतारुण्य किमाश्रितोसि ॥५३४॥

हरिहरोपाध्यायस्य

१—रविसंक्रमणकाले इति भावः । २—नौकाग्रमिति यावत् । ३—सुवर्णमित्यर्थः

लोचने हरिणगर्वमोचने
मा विभूषय[1] कृशाङ्गि कज्जलैः ।
शुद्ध एव यदि जीवहारकः
सायको न गरलेन लिप्यते ॥५३५॥

साहजिकरूपवत्या
भवति भवत्या विभूषणं भारः ।
सर्व्वाङ्गसौरभिण्या
दमनकवल्ल्याः[2] किमालि कुसुमेन ॥५३६॥

तस्य तनुर्मनुजस्य सितासित-
सङ्गममधि विधितः पतिता ।
यस्य कृते करभोरु विषीदसि
मिहिरातपलुलितेव लता ॥५३७॥

वीचीक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्प्पन्त्याः स्खलितसुभगं दर्शितावर्त्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरं[3] सन्निपत्य
स्त्रीणामाद्यं प्रणयिवचनं[4] विभ्रमो हि प्रियेषु ॥५३८॥

कालिदासस्य

सुन्दरि मम मतमेत-
न्न-कुल[5]प्रतिपालनं श्रेयः ।
इह नगरे प्रतिरथ्यं
भवति भुजङ्गस्य[6] सञ्चारः ॥५३९॥

१ – विदूषयेति भाण्डागारे, पृ० २७२ । २– मदनकरिण्याः इति आदर्शपुस्तक-पाठः । ३—'रसाभ्यन्तरः' इति मुद्रितमेघदूतपाठः । ४—प्रणयवचनमिति मुद्रितमेघदूत-पाठः । ५—नकुलः सर्पशत्रुः, पक्षे न कुलमिति यावत् । ६—सर्पस्य, पक्षे धूर्त्तस्य ।

वारिज वारि जहीहि निवासं
न हि जेतासि वधूमुखभासम् ।
हरभालानलजातनिपातः
शीतरोचिरपि रुचिरो नातः[1] ॥५४०॥

अधोमुखी(खः?)स्त्रीस्तनतुल्यताप्तये
प्रतप्य तीव्रं सुमहत्तरं तपः ।
यदा न तामाप तदा हृदि स्फुटं
विदीर्य्यते पक्वमिषेण दाडिमः ॥५४१॥

## अथ राधाविषयाणि

तपनतनूजातीरे
मधुरिपुरवलोकितः कुतुकात् ।
एतावत्यपराधे
राधा बाधाशतं सहते ॥५४२॥

देहरिमिश्रस्य

असकलनयनावलोकनेन
स्मितपरिहासमनोहरैर्वचोभिः ।
कमलमुखि मुरारिरेवमेवं
कथय कियन्ति दिनानि वञ्चनीयः ॥५४३॥

कविराजस्य

यदि गच्छसि मधुनगरी-
मिदमुद्धव शुद्धभावमावेद्यम् ।
तव गुणविलिखनहेतो-
र्वयमपि कुब्जाः किमौदास्यम् ॥५४४॥

गोकुलनाथोपाध्यायस्य

१—'शीतकरो नहि रुचिरो यातः' इति तु पाठान्तरम् ।

यदि मिलति मुकुन्दो माथुरो मद्वचोभिः
प्रियसहचर वाच्यः सर्वथा यत्नपूर्वम् ।
परमरसिक सैव प्रेयसी युज्यते ते
समुचितमथ जातं कुब्जिका वामनस्य ॥५४५॥

तस्यैव

पथिक हरिः कथनीयो मम वचनेन ।
पुनरपि गोकुलबाधा नयनजलेन ॥५४६॥

कुब्जासि प्रचुरादभङ्गविषयव्यासङ्गभारादत-
श्चिन्तामुच्चफलागमाय चतुरे मा चित्तवृत्ते कृथाः ।
यस्यामासविलासलालसवतो कुब्जा समाज्ञापतेः
सैवेयं मथुरापरा नयनोः पन्थानमारोहति ॥५४७॥

चित्रधरोपाध्यायस्य

आस्तामुद्धव विस्तरो यदुपतेः सन्देशवाचः श्रुताः
किं कस्मै प्रतिसन्दिशेम मथुरामासाद्य कः श्रोष्यति ।
कुब्जा तु स्वयमादिदेश यदिदं किञ्चित्तदा दिष्टया
गत्या सञ्चरतामनन्यशरणो हा धिक् वराको व्रजः ॥५४८॥

गोकुलनाथोपाध्यायस्य

गोविन्दो व्रजति व्रजादुपगतो ग्रामं यदूनामिति
प्राप्तो माथुरबन्धकीगृहमिति श्रुत्वापि यौ जीवतः ।
वज्रेणापि तयोर्म्मम श्रवणयोर्नाशं किमाशङ्कसे
विश्रब्धं वद कुब्जिका निजयशो गाथा यथा गायति ॥५४९॥

तस्यैव

शीतांशोः शरदा(?) पतन्ति[1] किरणाः श्रीखण्डचर्य्याविष-
ज्ज्वालान्ति ज्वलनन्ति(?) तामरसिनी पत्राणि वामभ्रुवाम् ।

1—तपन्तीति पाठान्तरम्

एकस्यैव शिशोरमुष्य मुरलीनादेन सूयेत चे-
त्पुत्रानन्दकुटुम्बिनी त्रिचतुरान् का स्यादमूषाकृतिः ॥५५०॥

दाक्षिणात्यस्य

मथुरापथिक मुरारेरुद्ग्रीवं द्वारि कथनीयम् ।
सम्प्रति वृन्दाविपिने कालियगरलानलज्वाला ॥५५१॥

मथुरापथिक मुरारिर्विनिवेद्यो यदुवंशवर्द्धनः ।
अधुनाप्यनपेतजीवितौ वत वृद्धौ पशुपालदम्पती ॥५५२॥

यदवधि मथुरामुपागतस्त्वं
तदवधि गोकुलवृत्तमेतदेव ।
दिशि दिशि सुलभाः प्रसूनमालाः
परमधिकं नलिनीदलस्य मूल्यम् ॥५५३॥

उद्धव माधवसविधे
विनिवेद्यं सर्वथा भवता ।
अपि बहुमूल्यं भवनं
यमुनाकुञ्जोपमं न स्यात् ॥५५४॥

त्यक्त्वा गोकुलमुद्धव स्वयमिदं गोपीजनैरावृतं
गोपालो मथुरामगादिति वरं दूये न तेनाधुना ।
कुब्जासङ्गरतस्तथापि सहसा लोका वदन्तीह तं
गोपीनाथ इतीव दुस्सहतरं तद्वाग्व्ययं(था?) बाधते ॥५५५॥

उत्कीर्णान्या स्फुरति नियतं ध्यानमन्यन्न चास्ते
पश्यत्यन्यं न खलु नयनं न श्रवोपि शृणोति ।
श्यामं श्यामं पथिषु चकितं रीतिरेतादृशी नो
वृन्दारण्ये चिरपरिचिताः के न जीवन्ति नार्य्यः ॥५५६॥

तत्साहसं सखि किमस्ति यदन्धकारे
यातं मया मधुरिपोरनुरञ्जनाय ।
एतत्परं हि सखि साहसमस्य वच्मो
लब्ध्वापि यद्भवनमागतमेव भूयः ॥५५७॥

छायातरुं पान्थ गवेषमाणो
ग्रामे मुधा क्लिश्यसि विश्रमाय ।
जानासि किन्नैव यदत्र राधा-
माधाय यातो मथुरां मुकुन्दः ॥५५८॥

आलोके पिशुनव्यथा चिरमनालोके मनोजव्यथा
नैराश्ये च जनुर्व्यथाभिगमने हानिः कुले सर्वथा ।
किं कर्तव्यमतः परं वद सखे श्रीमन्मुकुन्दे मया
मा जायेत नितम्बिनी परवशा हा दुर्दशा मादृशाम् ॥५५९॥

कूले काचित्तपनदुहितुर्निर्जने नीपमूले
मूर्त्तिः पीताम्बरवलयितालेखि केनाञ्जनेन ।
दैवाल्लग्ना यदवधि पुनस्तच्छविर्लोचनान्ते
श्यामाकारन्तदवधि मया पश्यते विश्वमेतत् ॥५६०॥

पल्लीसं० विश्वेश्वरोपाध्यायस्य

नदीयं कालिन्दी बहुविततशाखस्तरुरयं
समीपे घोषस्य व्रज पथिक वृन्दावनमिदम् ।
इति श्राव्यो नाथो मधुपुरगतो मैवमथवा
पुरोपेक्षाज्ञाने स्मरणमपि नोद्बोधकशतैः ॥५६१॥

शूलपाणिशर्मणः

आलिङ्गनानि वचनामृतसेवनानि
वामाशयेन विधिनैव निवारितानि ।
आलोकनेऽपि यदि गोकुलनाथ बाधा
राधा कथं हृदयसौष्ठवमादधातु ॥५६२॥

नरहरेः

## अथ पुनरपि शृङ्गाररसपद्यानि

तव तन्वि स्तनावेतौ नियतौ चक्रवर्त्तिनौ ।
आ समुद्रकरग्राही देवो यत्र करप्रदः ॥५६३॥

विक्रमादित्यचौरकवयोः[1]

नेदं सरोजमधि यामिनि यद्विभाति
नो वा विधुर्य्यदहनि प्रचुराभिरामः ।
तत्किं मधुद्रविसुधासरिते घनोरु
वस्त्वस्त्यपूर्वमवगुण्ठनवाससोऽन्तः ॥५६४॥

कमलोमिश्रस्य

दरमुद्रितपुण्डरीकमुग्धे नयने कुण्डलिते पुरः प्रियायाः ।
अथ कुण्डलिता ममापि भाले लिपयः शान्तिविवेकधीरतानाम् ॥५६५॥

वंशधरमहामहोपाध्यायस्य

यांश्चिन्तयामि सततं मयि सा विरक्ता
सा चान्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तांश्च तञ्च मदनञ्च इमाञ्च माञ्च ॥५६६॥

भर्तृहरेः

त्वन्मुखं वीक्ष्य पातालं कमलस्य श्रिया गतम् ।
अन्यथा कथमेतस्य नालेनाले बिलं भवेत् ॥५६७॥

पीताम्बरमिश्रस्य

सद्वृत्तमुक्ताफलगुम्फनेन हारेण लब्धो हृदये निवासः ।
एणीदृशस्त्वं पतितः पदान्ते मञ्जीरमौखर्य्यफलं तवैतत् ॥५६८॥

अमाभामान्यस्या मयि निगदतीन्दीवरदृशः
पतन्मन्यौनव्ये(?) नयननमसव्येन बलितम् ।

१—अर्धं विक्रमादित्यस्यार्धं चौरकवेः । भोजकालिदासयोरिति कश्चित् ।

प्रणीयास्त्वं धौताञ्जनमहह बन्धूचितमदा-
द्विपन्नाय प्रेम्णे सपदि तिलतोयाञ्जलिमिव ॥५७९॥

पदन्यासो गेहाद्बहिरहिफणारोपणसमो
वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः।
निजावासादन्यद्भवनमपर[1]द्वीपसदृशं
पुमानन्यो भाद्रे विधुरपि[2] चतुर्थी समुदितः ॥५७०॥

मय्यायाते सपदि शयनादुत्थितं चाटुवाक्यं
बध्वा पाणी बहु निगदितं क्षालितं पादयुग्मम्।
दत्वा वीटीं सविनयमथो वीजितं तालवृन्तै-
र्ब्रूते कोपं कुवलयदृशो भूयसो भक्तिरेव ॥५७१॥
भानुदत्तमिश्रस्य

तमो द्रव्यं नैल्याद्घटवदिति माने समुदिते
यदीदं रूपि स्यात्किमिह न भवेत्स्पार्शनगुणः।
इतीमं सत्तर्कं शिथिलयितुमन्तर्व्यवसिता
तमोवृन्दं धत्ते कचभरमिषेणेन्दुवदना ॥५७२॥
पक्षधरमिश्रस्य

नैकः प्रमितिविरोधान्न द्वौ प्रत्यक्षतो बाधः।
तन्वि कुचौ तव दृष्ट्वा संशयधारा परिस्फुरति ॥५७३॥
शिरोमणेः

आहूतापि चिराय चित्रभवनप्राप्ता मुहुर्वीक्षिता-
प्यन्विष्टापि करेण भित्तिमभितः स्पृष्टापि नो लक्षिता।
किन्तु श्वासतरङ्गसम्भ्रमलसद्भृङ्गावलीविभ्रमा-
दालीभिर्गृहदेहलीपरिसरे तन्वी समुन्नीयते ॥५७४॥

विसस्मार प्रायः स्तनजघनसौन्दर्य्यलहरी
समुन्नीतः स्रष्टुं विधिरपि च मध्यं मृगदृशः।

१—अभवदिति कपुस्तकपाठः। २—पुमानन्यः कान्ताद्विधुरिवेति कपुस्तकपाठः

पुनर्नैवास्राक्षीदथ पृथगिव स्यादिति भया-
न्निरालम्बस्थैर्य्यं यदिह तदनङ्गस्य महिमा ।।५७५।।

कल्याणि पाणिपतितानि विना विचार-
मेतानि मोक्तुमुचितानि न मौक्तिकानि ।
गुञ्जेति सञ्जनयते यदिह भ्रमन्ते
हस्तारविन्दनयनोत्पलयोः प्रभैव ।।५७६।।

कल्याणोपाध्यायस्य

नीचेऽप्यानतिरात्मनोपि विषमस्थानस्थितिर्य्योषितां
दृष्टिः कोपकषायितातिकरुणं सामाजिकानां वचः ।
हास्यं दारुणदुर्ज्जनस्य सुहृदामोदास्यमित्थं मया
कि किं किं न कलावति प्रियतमे त्वत्संगमे स्वीकृतम् ।।५७७।।

नो पृष्टो गुरुवल्लभादिनिचयो देवोऽन्यथा चिन्तितः
सुभ्रुस्त्वद्वदनावलोकनवशात् पाठादिकं विस्मृतम् ।
द्रव्यं नार्जितमर्ज्जितञ्च च यशो वैमुख्यभावात् प्रिये
किं किं किन्न कृतं कृशोदरि तव प्रीत्यै जनेनामुना ।।५७८।।

गुणपतिशर्म्मणः

मुग्धे प्रागिव वर्त्तसे कथमहो प्रत्यागतं प्रेयसे-
त्यालीभिः समुपेत्य सस्मितमुखं सोल्लासमुक्ते सति ।
सन्देहेन महोत्सवेन महता मोहेन कामेन वा
केनाक्रान्तमिदं मदीयमभवच्चेतो न निर्णीयते ।।५७९।।

आयातो दयितस्तवेति वचनं श्रुत्वा समुत्साहतः
कस्मै किं हि समर्प्पितं मृगदृशा तत् सादरं श्रूयताम् ।
आनन्दाय मनः कपोलफलके स्वेदाय मोदाश्रुणे
चक्षुः कम्पकुलाय कायलतिका तापाय तोयाञ्जलिः ।।५८०।।

वासः का सखि संवृणोतु सुदृशो बध्नातु का कुन्तलं
श्रीखण्डं हृदि का दधातु कुरुतां का वारिसेकं मुखे।
इत्यालीनिकरे परस्परकृतप्रश्ने सति प्रेयसा
दैवादागतमेव सर्वमकरोदेकन्तदालोकनम् ॥५८१॥

तानि प्राश्वि दिनानि येषु रजनी सेहे तमिस्रापदं
सृष्टिः सा विरराम यत्र भवति ज्योत्स्नामयो नातपः।
अद्यान्यः समयस्तथा हि परितस्तस्या मुखेन्दूदये
हस्ताहस्तिकया हरन्ति तिथयो राका वराकी यशः ॥५८२॥

दशावधानस्य

गुप्ते प्रेम्णि गते प्रकाशमभितो लब्ध्वाऽवकाशे खले
तद्दैनंदिनदृष्टिकौतुककथालापे समं गच्छति।
यूनोः संवृतयोरपि प्रतिपलं हा हन्त वक्रे विधौ
सा भूयः कृशतैव डिण्डिमयति प्रेम्णः प्रकर्षन्तयोः ॥५८३॥

अन्योन्याक्षिनिपातजातमदयोरन्योन्यचेष्टाशत-
स्पृष्टान्तःपदयोर्मनोभवशरव्याघातसंभ्रान्तयोः।
स्यादेव द्विरदेन्द्रयोरिव तयोरालिङ्गणं प्राङ्गणे
धैर्य्यं स्तम्भविडम्बिनी बलवती लज्जा न चेदर्गला ॥५८४॥

कवीन्द्रस्य

खेदश्चेतसि भेद एव वपुषोर्म्मौनं महाकन्दलो
विश्लेषश्च निमीलनं नयनयोरासीद्द्वयोरावयोः।
संवाहश्च स एव सोऽपि विदधे किं कार्मणं केन वा
मातर्म्मद्विषये जहौ परिचयं मद्वर्त्मनि प्रीतमः(?) ॥५८५॥

श्रीमता कथय कञ्चुक पूर्वं
कानि कानि सुकृतानि कृतानि।
येन यापयसि जन्म समस्तं
हारहृद्यहृदये हरिणाक्ष्याः ॥५८६॥

यस्मात्पूर्वसमुद्भवे कृतमहो वेण्याः सदा मज्जनं
किम्वा मन्मथनाशकस्य किमहो लक्ष्मीपतेः सेवनम् ।
मुक्ताहारविधूतपातकमुदाकञ्जाननायाः सदा
कामिन्याः स्तनमण्डलान्तरगतो मोदादुरीवृत्यसे(?) ॥५८७॥

विद्याकरमिश्रस्य

अये केलीगृहस्तम्भ किं कृतं सुकृतं त्वया ।
पर्य्यङ्के वल्लभं त्यक्त्वा त्वामालिङ्गति मानिनो ॥५८८॥

आनन्दयन्ति मदयन्ति विषादयन्ति
यूनां मनांसि तव यानि विलोकनानि ।
किं मन्त्रमावहसि तादृशमौषधं वा
किम्वा कृशोदरि दृशोरियमेव रीतिः ॥५८९॥

अद्य स प्रवसतीति सुभ्रुवः श्रोत्रसीमनि विजृम्भिते ध्वनौ ।
सद्य एव निजपाणिगुंफिते पुष्पदामनि महोरगभ्रमः ॥५९०॥

हरिपतेः

अभिमतमभितः कृताङ्गभङ्ग्या
कुचयुगमुन्नतिवित्तमुन्नमय्य ।
तनुरभिलषितं तनोति तन्वी
व्यवृणवत वेल्लितबाहुवल्लरी का ॥५९१॥

तत्कालोपचिताम्विलोक्य दयितां चित्तेन दूत्या वचो
मिथ्येत्याकलयाश्चकार दयितो देशान्तरादागतः ।
उद्यानानि विपल्लवानि सरसी निष्पद्मनीकाः सखी-
र्नीहारा हरणापवर्त्तितवचो वीक्ष्य प्रतीतः पुनः ॥५९२॥

दूरप्रसारिगुणतः केवलमन्तर्म्मधुरसप्रवणम् ।
कलयसि किमस्य सरले केतककुसुमोपमानस्य ॥५९३॥

सबलमिश्रस्य

सरले सौरभसारैर्मा धूपय कुन्तलन्तन्व्याः ।
रूपभरानमितेयं सौरभभारैर्विभज्येत ॥५६४॥

अधिदेहलि कापि हेमवल्ली स्फुरदधिपल्लवमुग्धशीतरोचिः[1] ।
अधिखञ्जन चञ्चुमौक्तिकालो फलितं कस्य सुजन्मनस्तपोभिः ॥५६५॥

लक्ष्मीनाथस्य

मा गा इत्यपमङ्गलं व्रज पते स्नेहेन हीनं वचः
तिष्ठेति प्रभुता यथारुचि कुरु ह्येषाप्युदासीनता ।
इत्यालोच्य मृगीदृशा नवघनप्रारम्भविज्ञापके[2]
प्रादुर्भूतकदम्बकोरकचये दृष्टिः समारोपिता ॥५६६॥

कस्मात्त्वं हि विखिद्यसे कतिपयैरेव प्रिये वासरै-
रायाता वयमेहि धेहि पुरतः प्रास्थानिकं मङ्गलम् ।
एवं वादिनि वल्लभे दयितया निःश्वस्य पाणौ कृते
मङ्गल्यः कलशो विलोचनपयोधाराभिरापूरितः ॥५६७॥

किमिन्दुः किम्पद्मं किमु मुकुरबिम्बं किमु मुखं
किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ ।
खगौ[3] वा गुच्छौ वा कनककलशौ वा किमु कुचौ
तडिद्वा तारा वा कनकलतिका वा किमबला ॥५६८॥

विद्यापतेः

द्रागुन्मीलनमांसलः परिचयः कुत्रेति नो बुद्ध्यते
सैवेति प्रतिभाति हन्त हृदये सा केति न स्मर्य्यते ।
विश्रम्भो वदति स्म तां निविशते नो तत्र सम्भावना
गूढं सौहृदमाविरस्ति न पुनस्तर्कस्तदालम्बनः ॥५६९॥

१—'अधिदेहलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः ।
उपखञ्जनचञ्चु · · · · ' इति भाण्डागारपाठः, पृ० २८८ ।
२—'जलधरप्रारम्भसंसूचके' इति पाठान्तरम् । ३—कटाविति पाठान्तरम् ।

लतामूले लीनो हरिणपरिहीनो हिमकरः
स्फुरत्ताराकारा[1] गलति जलधारा कुवलयात् ।
धुनीते बन्धूकं तिलकुसुमजन्मापि पवनो
गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥६००॥

लक्ष्मीनाथस्य

विलसितरमणं दृष्ट्वा
दृग्मनसी प्रेषिते तत्र ।
तावत्सर्वांगणस्था
चित्रमिवाभाति लोकेषु ॥६०१॥

श्रीविद्याकरमिश्रस्य

कलय कमलमस्मिन्नित्युदीर्य्य स्थितानां
प्रतिफलितमुखेषु न्यस्तहस्तारविन्दाः ।
स्फटिकविपिनमध्ये माणिकप्रेयसीनां
निभृतहसितपात्रं यत्र याता युवानः ॥६०२॥

पादालक्तकगौरवादपि गतिः शैथिल्यमालम्बते
नीवीबन्धपरिश्रमादपि भुजा संजायते विश्लथा ।
सम्पर्कात्कुसुमस्रजोऽपि च तनौ ताम्रत्वमापद्यते
सख्यः किं करवाणि भूषणकलामात्रप्रिये प्रेयसि ॥६०३॥

मञ्चे किमपि शयाना
वदति न मानादियं रहसि ।
वल्भममभिशुकनाशा(?)-
मनुदितहासा मुहुः स्पृशति ॥६०४॥

मातः केलिगृहं न यामि शयने कस्माच्च चन्द्रानने
जामाता तव निर्दयो निजभुजाबन्धेन मां पीडति ।

१—'स्खलन्मुक्ताकारा' इति भाण्डागारपाठः, पृ० २८९ ।

अङ्गानि व्रणतां तनोति सततं दन्तैर्दशत्योष्ठकं
नीवीबन्धनमोक्षणञ्च कुरुते निद्रां न लेभे निशि ॥६०५॥

तन्व्या बालाकृशतनुरियं त्यज्यतामत्र शंका
दृष्टा काचिद्भ्रमरभरतो मञ्जरी भज्यमाना ।
तस्मादेषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्तो वितरति रसं नेक्षुदण्डः कदापि ॥६०६॥

लखिमाठक्कुराज्ञ्याः

उचितमनुचितं यशोऽयशो वा प्रथमत एव विचारणीयमालि ।
प्रणयपरवशम्विधाय चेतः कथय कथं विमुखी विषीदसि त्वम् ॥६०७॥

चञ्चलनयननिपातैर्जगदपि सम्मोहयन्तीनाम् ।
शिव शिव कुलकामिनीनां हलिकपुरे डाकिनीप्रवादः ॥६०८॥

अन्तर्गता मदनवह्निशिखावली या
सा बाध्यते किमिह चन्दनचर्चितेन ।
यः कुम्भकारपयसोपरि[1] पङ्कलेप-
स्तापाय केवलमसौ न तु तापशान्त्यै ॥६०९॥

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपो
लेपः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहोऽनलः ।
यत्कान्ताकुचपार्श्वबाहुलतिकाहिन्दोललीलासुखं
लब्धं कुम्भवर त्वया न हि सुखं दुःखैर्विना लभ्यते ॥६१०॥

उत्पन्नो घट चक्रवर्त्त्यसि पुनर्व्वह्निं प्रविश्य त्वया
प्रातः स्नानपरिश्रमेण पयसां पानेन तप्तं तपः ।
आक्रम्योन्नतजानु यन्मृगदृशां तिष्ठन्नितम्बस्थले
कण्ठालम्बितबाहुवल्लिकुचयोः सीमानमास्कन्दसि ॥६११॥

१—'पवनोपरि' इति भाण्डागारपाठः, पृ २९७ ।

तरुण्या नीयमानोऽसौ दीपोऽञ्चलपटावृतः ।
न दत्तौ विधिना हस्तौ धुनोतीति मुहुः शिरः ॥६१२॥

आर्द्रं वासो व्यपनय वृथा खिद्यसे वीजयन्ती
पाटीराम्भः कुरु बहिरलं पल्लवारोपणेन ।
मा वैकल्यं गमय नितरामालि किं बालिशा त्वं
हृद्रोगः किं विरमति न ते हस्तसम्मार्जनेन ॥६१३॥

अविलम्बसरस्वत्याः

गुरुजननयने पिधेहि नेत्रे त्वरितमिहास्तमुपैहि पद्मबन्धो ।
इति वदति मनोभवाभितप्ता चिरसमयागतवल्लभा मृगाक्षी ॥६१४॥

अमृतं वदने हि योषितां हृदि हालाहलमेव केवलम् ।
अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥६१५॥

विक्रमादित्यकालिदासयोः

प्रिये कर्णेजपत्रासात्प्रेम त्यक्तुं किमिच्छसि ।
कोऽपि लिक्षाभयत्रासाज्जहाति वसनं जनः ॥६१६॥

सखि वासनयाऽनया न जाने
मम यास्यन्ति कियन्ति वासराणि ।
स भविष्यति पक्षपातशीलो
मयि नीलोत्पलसुन्दरो मुकुन्दः ॥६१७॥

सूचीव जगति दूती जन्म परार्थं हि यापयति ।
यद्गुणमुभयोः कलयत्युभयोः संगमाय चञ्चला भ्रमति ॥६१८॥

शयाना पर्यङ्के दरदलितपङ्केरुहमुखी
निशाभागं दीना शिव शिव नवीना गमयति ।
उदभ्रानङ्गाङ्गा बलदधिकभङ्गानयनयो-
रिदानीमागन्ता रजनिरिति रन्ता क्षितिगमात् ॥६१९॥

श्रुतो वंशीधीरध्वनिरनुमितं कुञ्जभवनं
विलासोऽनुध्यातो[1] मधुरिपुरभून्नेत्रविषयः[2] ।
गता नीवी मुक्तिं हृदयमिदमद्वैतमभज-
न्न जानीमः कोऽयं सखि मदनतन्त्रस्य विभवः ॥६२०॥

आक्रान्ता[3] दशमध्वजस्य गतिना संमूर्च्छिता निर्जले
तूर्य्यद्वादशवद्द्वितीयमतिमन्नेकादशाभस्तनी ।
सा षष्ठी कटिपञ्चमी च नवमभ्रूः सप्तमो वर्जिता
प्राप्नोत्यष्टमवेदनां त्वमधुना तूर्णं तृतीयो भव[4] ॥६२१॥

लखिमाठक्कुराज्ञ्याः

गर्जति वारिदपटली
वर्षति नयनारविन्दमबलायाः ।
भुजवल्लिमूलसेको
विरहलता पल्लवं तनुते ॥६२२॥

पदन्यासैरासीत्कमलपरिपूर्णा वसुमती
दृगान्दोलैरिन्दीवरमयमभूदम्बरतलं
स्मितं मन्दं मन्दं विरचय चलापाङ्गि मधुरं
धरायामभ्यास्तां विधुमुखि सुधायाः परिचयः ॥६२३॥

## अथ कुलटावर्णनम्

मा भून्भूमिरियं सदैव सकला सङ्केतशय्यामयी
कालोऽप्येष बभूव नैव सकलः प्रावृट्तमिस्रामयः ।
सृष्टिः प्रोन्मदपुंमयी न विदधे दुश्चेतसा वेधसा
मातस्तात कथं घटेत कुलटेत्यस्मादृशीनां यशः ॥६२४॥

१—'अन्तर्ध्यातः' इति कपुस्तकपाठः । २—मधुरिपुरुपेतोक्षिविषयमिति कपुस्तकपाठः । ३—सन्तप्तेति पाठान्तरम् । ४—पद्येऽस्मिन् संख्यावाचकाः शब्दाः मेषादिद्वादशराशिसंज्ञाविषयकास्तथाहि—दशमध्वजस्य दशमो मकरः, स एव ध्वजो यस्य, स कामदेवस्तस्येति यावत् ।

पृथ्वी तावत् त्रिकोणा नगनगरनदीग्रामरुद्धं[1] तदर्द्धं
तत्राप्यर्द्धं युवत्यः शिशुविगतवयो दूषितं यत्तदर्द्धम्[2] ।
त्याज्याः पुत्राः श्वशुरगुरुजनाः[3] सन्ति शेषाः कियन्तो
मिथ्यावादो जनानां मुखरमुखरवः पुंश्चली पुंश्चलीति ॥६२५॥

एते वारिकणान्किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥६२६॥

भानुदत्तमिश्रस्य

सरसभुजङ्गमवल्लीरचिताधररङ्गभङ्गभीतेव ।
पितरि मृते कुलटेयं रोदिति हा तात हा तात ॥६२७॥

## अथ नानाप्रकारपद्यानि

धन्योऽसि रे परिचितोसि परीक्षितोसि
सर्वत्र ते कपट कण्टकितोऽनुरागः ।
सौधे सुधाधरमुखी विदुषी सखी मे
पन्थानमाकलयते कितव क्व यासि ॥६२८॥

त्वञ्चेदुद्धव संप्रयासि मथुरामेतन्निवेद्यं हरौ
याचे किञ्च कृताञ्जलिर्न भवता गन्तव्यमत्र व्रजे ।
मर्त्तव्ये सति हन्त यद्युभयथा श्रेयस्तवायोगत-
स्त्वद्विश्लेषविषादजैर्न च पुनः कुब्जोदितानचरैः ॥६२९॥

पाथेयं पथिकस्य मे स्थितिमतः सौवर्णसौधस्थली
क्षुत्तृष्णातरलस्य तावदमृतं पाथःपिपासोः पयः ।

१—विपुलनदनदीग्रावरुद्धमिति भाण्डागारपाठः, पृ० ३७० । २—रोगिणो योगिनश्चेति भाण्डागारपाठः, पृ० ३७० । ३—'त्याज्यास्तत्रापि मान्याः श्वशुरपितृमुखा' इति पाठान्तरम् ।

लक्ष्मीं भावयतो निधिश्शिशयिषोः शय्या जिगीषोर्जय-
स्तत्किं यन्न सुधांशुसुन्दरमुखि त्वत्प्रेमसम्बर्द्धते ॥६३०॥

अवधिदिनावधिजीवाः प्रसीद जीवन्तु पथिकजनजायाः।
दुर्ल्लंध्यवर्त्मशैलौ स्तनौ पिधेहि प्रपापालि ॥६३१॥

गोवर्द्धनस्य

सम्वरणाय वधूटी बहुपरिपाटीङ्करोति किन्तेन।
सम्प्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥६३२॥

बालोपलालनमुहुस्तुतिवाञ्छितार्थ-
सम्पादनानि सनिरीक्षणलक्षितस्य।
प्रेम्णोतिमूढ़ यतसे किमु गोपनाय
त्वं चत्वरे शश इवेक्षितविग्रहस्य ॥६३३॥

सदये हृदये मृगीदृशः पदमाधत्त यथा यथा युवा।
बहिराविरभूत्तथा तथा स्थलसंकोचभिया कुचद्वयम् ॥६३४॥

आपेदिरेऽम्बरपथं परितः पतङ्गाः
भृङ्गारसालमुकुलानि समाश्रयन्ते।
संकोचमञ्चति सरस्त्वयि दीनदीने
मीनो नु हन्त कतमाङ्गतिमभ्युपैतु ॥६३५॥

पण्डितराजस्य

सरलयोः सखि सख्यमुदीरितं कुटिलयोर्घटनैव न जायते।
भवति यद्यपि वक्रविशुद्धयोः क्षणिकमेव धनुःशरयोरिव ॥६३६॥

वेणीनां दृढबन्धनाय धनुषां नैव्याय(?) मुक्तास्रजां
हृद्वेधाय विरुद्धवर्त्मगमनक्लेशाय नावामपि।
वीणायाः परिवादनीतिपदवीलाभाय विद्यावतां
विश्लेषाय सुखाय कस्य भुवने धात्रा गुणो निर्म्मितः ॥६३७॥

## अथ वायुवर्णनम्

उत्सार्य्य कुन्तलमपास्य दुकूलमोष-
दुल्लास्य[1] बाहुलतिकामलसास्तरुण्यः ।
स्वेदाम्बुसिक्ततनवः स्पृहयन्ति यस्मै
तस्मै नमः सुकृतिने मलयानिलाय ॥६३८॥

हेमाम्भोरुहपत्तने परिमलस्तेयी वसन्तानिल-
स्तत्रत्यैरपि यामिकैर्म्मधुकरैरारब्धकोलाहलः ।
निर्य्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवै-
र्लिप्ते केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥६३९॥

वारम्वारं[2] धुतकुसुमितारण्यरेवातटे वा
सेवापुण्यं परिणतमिदं तावकं तर्कयामि ।
यत्त्वां मत्वाऽन्तिकमुपगतं कामवामाभिरामाः
स्वैरं[3] स्वैरं कुचकलशतो वस्त्रमुत्सारयन्ति ॥६४०॥

रेवानिर्झरवारिबिन्दुशिशिरः प्रेयानिवायं सखे
वातः फुल्ललवङ्गसङ्गमवशान्मन्दः कुरङ्गीदृशाम् ।
वक्त्रं चुम्बति वेपथुं जनयति प्रोद्घाटयत्यंशुकं
सीत्कारन्तनुते तनोति पुलकं केशान्तमाकर्षति ॥६४१॥

इयं सन्ध्या दूरादहमुपगतो हन्त मलया-
त्तदेकान्त्वद्गेहे करुणावति नेष्यामि रजनीम् ।
समीरेणैवोक्ता नवकुसुमिता चूतलतिका
धुनाना मूर्द्धानं नहि नहि नहीत्येव कुरुते ॥६४२॥

समुत्थितो दक्षिणपर्वतोदरा-
द्बिलेशयासङ्गनितान्तसंभ्रमात् ।

१—उन्नाम्येति पाठान्तरम् । २—मन्दं मन्दमिति पाठान्तरम् । ३—रामाः स्वैर-मिति पाठान्तरम् ।

नदीश्वरीसीकरलालसः क्षणं
चकार कालात्ययमद्य दक्षिणः ॥६४३॥

भृङ्गालीकण्ठमाला विकचकमलिनीधूलिभिर्धूसराङ्गाः
प्रोद्यच्चन्द्र[1]कल्पालघुतरलहरीशीकरासारलालाः।
अङ्कादङ्कं व्रजन्तो विकचकुमुदिनीमल्लिकामालतीनां[2]
मोदन्ते मन्दमन्दं मलयगिरिदरीगर्भतो वातपोताः ॥६४४॥

कालिदासस्य

विदलितवनजाताश्चुम्बकवाता दिशि दिशि वाताः
शिशिरतरा गगने हृदसाराः क्वचिदपि तारास्ताराकारा न विधुकराः।
प्रमदं दधति द्रागति रवविद्रावितजननिद्राः खगनिकराः
कृतरत्यभिसाराः परमोदाराः कान्तागाराद्गमनपराः ॥६४५॥

एतद्भूषणकौशलं तव तनौ पश्येत्तदा माधवो
राधे तत्सविधे हि चेतसि चले चेद्धैर्यमाधास्यति।
इत्थं जल्पति शिल्पकारिणि जने तस्याः स्मरन्त्या हरिं
सद्यः स्वेदसरिद्व्यलुंपदमलं पत्रावलीमण्डलम् ॥६४६॥

## अथ नानाविषयकपद्यानि

मुहुर्व्यजनवीजनैर्बहलचन्दनासेचनैः
सरोजदलवेष्टनैरपि न चेष्टते सुन्दरी।
परन्तु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः[3] ॥६४७॥

देहरिमिश्रस्य

नखानि विधुशङ्कया करतले न तन्व्याग्रणो-
त्ततः किसलयभ्रमाच्छयमथोत्क्षिपद्दूरतः।

---

१—'चञ्चन्तश्चन्द्र' इति पाठान्तरम्। २—विकसितविलसत्केतकीमालतीनामिति पाठान्तरम्। ३—विरहप्रेमातिशयः।

ततो वलयसिञ्जितं भ्रमरगुञ्जिताशङ्कया
उहूरिति कुहूरवध्वनिभियापतन्मूर्च्छिता[1] ॥६४८॥

उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते
स्फोटः स्यादिति नाङ्गकं मलयजक्षोदाम्भसा सिच्यते ।
स्यादस्यातिभरात्पराभव इति त्रासान्न वा पल्लवा-
रोपो वक्षसि तत्कथं वरतनोर्बाधा समाधीयते[2] ॥६४९॥

जयदेवस्य

घनोऽयञ्चेदञ्चेदुपरि विकरंश्चन्दनरसा-
नुदारान्नैहारी सरिदुरसि हारोभवति च ।
समन्तात्प्राणाली चिरमुपवनाली मिलति वा
तदप्यस्यास्तापो हरिविरहजः किं विरमति ॥६५०॥

चूलूकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् ।
अधिकतरमुष्णमनयोः किमिह चकोरावधारयसि ॥६५१॥

एतौ रामचन्द्रमिश्रस्य

मा शीतोदकशीतलैर्मलयजक्षोदैर्मनोजानल-
ज्वालान्दीपय किञ्च वीजय न वा तत्तालवृन्तानिलैः ।
सोऽयन्निर्दयमानसो यदुपतिर्लब्धावकाशोऽधुना
सन्तापज्वरजर्जरात्सखि हृदो दाहन्तनिर्य्यास्यति ॥६५२॥

गङ्गानन्दकवीन्द्रस्य

यो मे पूर्व्वं प्रतिदिनमभूद्भ्रूविभङ्गैकदर्शी
सायं सायं कृतकरपुटः स्तोतुमासीद्विलासी ।
लोके राधारमणपदवीमप्यधाद्भृङ्ग तस्मिन्
को जानीते कमलनयने रीतिरन्यादृशी स्यात्[3] ॥६५३॥

विश्वेश्वरशर्म्मणः

१—सौन्दर्यविरहः । २—विरहसौकुमार्य्ययोरतिशयः । वरतनोराधिः समाधीयतामिति पाठान्तरम् । ३—इति विरहः ।

क्रिया सर्वस्याधो नयति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥६५४॥

दमितः करिशावकुम्भदम्भः कलशोनामलसीकृतोभिमानः ।
सुदृशः क्रमशस्तनद्वयाभ्यां करलभ्या कनकाचलस्य लक्ष्मीः ॥६५५॥

कल्याणोपाध्यायस्य

एकः कोपि महीधरो लघुतरो दोर्भ्यां धृतो लीलया
तेन त्वं दिवि भूतले च विदितो गोवर्द्धनोद्धारकः ।
त्वां त्रैलोक्यधरं वहामि कुचयोरग्रे सदापुष्पवत्-
तत्किं केशव जल्पितेन बहुना पुण्यैर्यशो लभ्यते ॥६५६॥

एतस्य वेश्मनि कलावति हालिकस्य
दुर्दैववैभववशात्पतितासि तन्वि ।
तद्वारिकुम्भवहनाय करीष[1]कृत्यै
चातुर्यमर्जय वशीकरणाय भर्तुः ॥६५७॥

यं दोर्घेण मुमोच मन्दरगिरिक्षोभेण रत्नाकरो
यं शौरिः स्वयमाददे पुरभिदे दत्त्वा कलामैन्दवीम् ।
लक्ष्मीर्यत्सहवासलालसतया भेजे सरोजेक्षणं
सोऽप्येवं तव वल्लवीचरणयोरास्ते लुठन्कौस्तुभः ॥६५८॥

स्वयमनुरागविहीनो मामनुरक्तां करोति यत्नेन ।
सहचरि हरिमधि वाच्यः प्रणये सति चातुरी दोषः ॥६५९॥

स्मर हर कतरत्परुषं हालाहलकवलयाचनावचसोः ।
एकैव तु रसज्ञा तदुभयरसतारतम्यज्ञा ॥६६०॥

१—करीषस्तु शुष्कगोमयम्

स्मरकल्पद्रुमो बाले तव भाले द्विपत्त्रकः ।
पत्त्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥६६१॥

वचः स्निग्धं ब्रूते शयनमपरावृत्त्य कुरुते
न शोणं दृक्कोणं वहति न बहिर्गच्छति मनाक् ।
करे कृत्वा पर्णं मयि ददति पूगीविरहितं
प्रकोपं पद्माक्ष्याः स्मितविधुरमास्यङ्कथयति ॥६६२॥

भानुदत्तमिश्रस्य

नारुण्यं मुखमण्डले न च वचो वैदग्ध्यमन्यादृशं
न भ्रूभङ्गपरिग्रहो न च रहः प्रश्नेऽपि मौनस्थितिः ।
एतत्सम्प्रति सन्तनोति सुतनोः कोपन्तु मद्वस्तुनि
स्वाधीनेऽपि पुरेव पङ्कजदृशो यत्न प्रभुत्वग्रहः ॥६६३॥

गणपतिमिश्रस्य

मुग्धे वल्लभचौर्य्यवृत्तिरपि ते मातः कदा कस्य वा
किम्वा वस्तु हृतं सुहाटकघटौ मिथ्याधृतौ कुत्र तत् ।
वस्त्रान्तैः पिहितावमू सुविहितौ स्पृष्ट्वा कराभ्यां मुदा
वक्षोजौ तव नापरस्य वदतः प्रीतिं परां जग्मतुः ॥६६४॥

श्रीविद्याकरमिश्रस्य

वक्त्रं घर्म्मसमाकुलं कुचयुगं काश्मीररागच्युतं
धम्मिल्लोपि च मल्लिकाविरहितो धौतस्तथा चाधरः ।
इत्यालोच्य निजाङ्गरीतिमखिलं बाला गवाक्षान्तरे
दत्वा नेत्रयुगं मुहुर्गुरुजनं साशङ्कमुद्वीक्षते ॥६६५॥

जगदानन्दस्य

लज्जामन्थरया दृशा वरतनो मां पश्य मा पश्य वा
पीयूषद्रवशीतलेन वचसा मां सिञ्च मा सिञ्च वा ।
अङ्गैः कन्दलकोमलैरपि मनागालिङ्ग मा लिङ्ग वा
तन्वङ्गि श्वसिता निवारय परं बिम्बाधरस्ताम्यति ॥६६६॥

तस्यैव

कलावति चलां दृष्टिं न कुर्य्यास्त्वं मुहुर्मुहुः ।
लग्नोऽपि न तथा बाणो बाधते चालितो यथा ॥६६७॥

कवीन्द्रस्य

कुसुमावचयाय पुरोपवने नवमल्लिघने गतमद्य मया
पतितोऽलिगणः स कुरङ्गमदेमदुरस्यति सौरभलुब्धतया ।
अपसारित एव स पाणियुगेन तदाकरुणेन सखि त्वरया
न तु तद्विजितं यदुरोभवयोरुजितं नखचिह्नपरम्परया ॥६६८॥

धीरेन्द्रोपाध्यायस्य

कति चिद्दिवसानि तथा गमितानि गृहे तव सङ्गमरोचनया
कतिचिद्विपिने नलिनीशयने वचनेन पिकीमदमोचनया ।
न वनेपि रतिर्भवनेऽपि न यं प्रतिरूपविनिर्जितरोचनया
करुणावरुणालय किं क्रियतामरुणायतपङ्कजलोचनया ॥६६९॥

तस्यैव

कलकोकिलनादविवादबलद्भ्रमरावलिलोलरसालद्रुम-
क्रममालतिकादिकदम्बलसत्कुसुमागममोदमनोजशरैः ।
परिपीडितया विधुसान्द्रकलाकमलाकरचम्पकसंगदथ-
त्पवनैरनुचिन्तितया प्रिय सा सखि सम्प्रति किं क्रियतेऽबलया ॥६७०॥

चित्रपतिशर्म्मणः

शशी हर्त्तुं लोभान्मुखकमलशोभां श्रुतितलं
सिषेवे सातङ्कस्तव तरुणि ताटङ्कपटात् ।
तदन्तःपीयूषं निखिलमथ निःक्षेप्तुमधरे
मनोजन्मा मुष्णान्मुहुरहह तुच्छं तमकरोत् ॥६७१॥

कुवलयनयनांस्तनान्तरेषु क्षणमपि येषु न शेरते युवानः ।
शिव शिव करुणापराङ्मुखोऽसौ गणयति तान्यपि वासराणि वेधाः ॥६७२॥

अयि सुतनु सुशीले तल्पमारुह्य तूर्णं
विरचय मम कण्ठे बन्धनं बाहुवल्ल्या ।
इति निगदति नाथे दीपमालोकयन्ती
हरि हरि हरिणाक्षी ह्रीसमुद्रे निमग्ना ॥६७३॥

हत्वा कटाक्ष[1]विशिखैर्गत्वा कति चित्पदानि पद्माक्षी ।
जीवति युवा न वा किं शिव शिव भूयो विलोकयति ॥६७४॥

या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा
श्यामा प्रेमसुखावहा[2] गुणवती नित्यं मनोहारिणी ।
सा केनापि हृता तया विरहितो गन्तुं न शक्नोम्यहं
भो भिक्षो तव गेहिनी नहि नहि प्राणप्रिया यष्टिका ॥६७५॥

रोमावलीभुजङ्गी नाभेरुदिता मुखेन्दुमालेढुम् ।
दृष्ट्वा कचभरबर्हिः स्तनगिरिमध्ये विलीयते तन्व्याः ॥६७६॥

लग्नाऽधुना मदुदरे विषमा भुजङ्गी
मातर्न क्रन्दति पुनः किमतीह चित्रम् ।
नैवाश्रयं दशति पुत्रि कदाचिदेषा
यूनां मनांसि नियतं कवलीकरोति ॥६७७॥

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥६७८॥

अमरोः

उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली
रोमाली नवनीलनीरदरुचिः सेयं कलिन्दात्मजा ।

१—लोचनेति भाण्डागारपाठः, पृ० २७२ । २—गौरीस्पर्शसुखावहेति भाण्डागारपाठः, पृ० १९१ ।

तीर्थं जातमिदं सुपुण्यजनकं यत्राज्ञयोः संगम-
श्चन्द्रो मज्जति लाञ्छनेन सहसा[1] नूनं नखाङ्कच्छलात् ॥६७६॥

इयं कलाविलासिनी कलावती समीपगा
धृतारविन्दलोचना मनोक(ज?)शोकमोचना ।
नवीननीरदच्छटासमानकेशभूषिता
न कस्य चिज्जनस्य चित्तवृत्तितापखण्डिता ॥६८०॥

कृष्णदत्तोपाध्यायस्य

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥६८१॥

जयदेवस्य

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥६८२॥

सुविभोकस्य[2]

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदविन्दवः ॥६८३॥

कुमारे कालिदासस्य

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतटे चेतः समुत्कण्ठते ॥६८४॥

---

१—लाञ्छनापहृतये' इति पाठान्तरम् । २—इति सदुक्तौ, पृ० १४१

अमुना यमुनाजलकेलिकृता सहसा तरसा परिरभ्य भृता ।
हरिणा हरिणी मृगनेत्रवती नवयौवनयौवनभारवती ॥६८५॥

अणोरणीयान्महतो महीयान्मध्यं नितम्बश्च यदङ्गनायाः ।
तदङ्गरागारुणितं मदीयं यज्ञोपवीतं परमं पवित्रम् ॥६८६॥
पण्डितराजस्य

किं कन्दर्प्पतरोरियं कुसुमिता रम्या नवा वल्लरी
किं मेरोः शिखरादुपागतवती काऽपि प्रभा काञ्चनी ।
किन्नेत्रस्य सुखप्रदा सुललिता चान्द्री कला निर्म्मला
किं लावण्यतडागभूषणकरी नित्योत्सवा पद्मिनी ॥६८७॥
प्राचः

अध्यापितासि विधुमुखि कौशलमिदमद्भुतङ्केन ।
गच्छसि यथा यथा बहिरहह ममान्तस्तथा तथा विशसि ॥६८८॥
नव्ययशोधरस्य

कापि कुड्यलिखिताऽवधिरेखाः प्रोषितप्रियतमा गणयन्ती ।
वेश्मनि प्रबलवह्निपरीते सास्रया बहिरनीयत सख्या ॥६८९॥
राम(चन्द्र)स्य

वज्रं जीर्ज्जति वज्रिणोपि च हरेश्चक्रं च वक्रं तथा
दण्डः खण्डशतं यमस्य दलितः पाशो भवेत्पाशिनः ।
लङ्केशोरसि तत्र मन्मथशरो मग्नो न भग्नो यतः
कः शाखी सखि यस्य पुष्पमभवत्पुष्पायुधस्यायुधम् ॥६९०॥

पथि पथिकवधूभिः सादरं पृच्छ्यमाना
कुवलयदलनीलः कोऽयमार्ये तवेति ।
स्मितविकसितगण्डं व्रीडविभ्रान्तनेत्रं
वदनमपहरन्ती स्पष्टमाचष्ट सीता ॥६९१॥

सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।

गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥६६२॥

पद्यत्रयं हनूमतः

न शुकी न पिकी न च वल्लकी स्फुटमेवंविधकोमलो ध्वनिः ।
ध्रुवमित्यत्रधारयन्विधिः सुतनोः कण्ठमलेखयत्त्रिधा ॥६६३॥

सुधारसो धातुरकौशलेन
हा हन्त हालाहलसोदरोऽभूत् ।
केनोपमीयेत कलावतीनां
मानावसानाधरसीधुपानम् ॥६९४॥

पद्यद्वयं परशुराममिश्रस्य

दुकूलं दोर्मूलात्प्रणयिनिपरीरम्भरसिके
हरत्यम्भोजाक्षी निभृतनिभृतं नम्रवदना ।
प्रियाश्लेषद्वेषिण्यपसरतु लज्जा द्रुतमिति
स्मितज्योत्स्नयैव स्तनकनकशम्भुं स्नपयति ॥६९५॥

विद्यानिधेः

इतरेतरयन्त्रितोरुयुग्मं
कठिनोरुस्तनपीडिताभिरामम् ।
भुजमूलशयानुगण्डमूलं
मिथुनं स्यूतमिवाभवन्निशायाम् ॥६९६॥

गौडवासिनः

कुचो लेभे हारं घनकठिनपीनोन्नततया
नितम्बो विस्तारैः कनकमयकाञ्चीमलभत ।
तयोर्मध्यो देशस्त्रिवलिनिगडैर्बन्धनमगा-
न्न कोपि क्षीणानां जगति कुरुते सम्भ्रमपदम् ॥६९७॥

तनुजीवनयोरभेदभावं ब्रुवतोः किञ्चन कान्तयोः क्रमेण ।
स्फुटमाह यमोपमस्तदानीं ककरे के चरणायुधस्य नादः ॥६९८॥

लज्जा नापगता न चापि हृदयं सम्यक्तया शीलितं
चेतस्येव सखि स्थिताः स्मृतिभुवस्ते ते विलासोदयाः ।
जाते प्रेमनवाङ्कुरे प्रतिपलं प्रोद्ग्रीवताशालिनि
क्षिप्तो निष्करुणेन हन्त विधिना विश्लेषवैश्वानरः ॥६६६॥

अनवसरे भजमानो गुणवानपि गञ्जनं लभते ।
आलिङ्गने नताङ्ग्या हृदयादपसार्य्यते हारः ॥७००॥

चक्रीयति वृत्तिषु युवा पिञ्जरशकुनीयति प्रमदा ।
एतत्प्रेम यदन्यत् प्रभवति यूनोः कलङ्काय ॥७०१॥

गम्भीरनीरस्थितपद्मरागः कुलाङ्गनानां हृदयानुरागः ।
न विद्यते यद्यपि दर्शनीयः तथापि चित्तव्यसनङ्करीयः ॥७०२॥

उषसि गुरुसमीपे वाससा सावधाना
प्रियलिखितनखाङ्कङ्गोपयन्ती समन्तात् ।
किमिदमिति सखीभिः सादरं पृच्छ्यमाणा
हरि हरि हरिणाक्षी ह्रीसमुद्रे निमग्ना ॥७०३॥

नपुंसक इति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥७०४॥

मद्दृष्टिस्तरिरेतदङ्गसुषमासिन्धौ कचैः शैवलै-
रुद्धा नेत्रगुणा हृतापि पतिता पङ्के पुनः कज्जले ।
नासावंशवशाद्व्यलंघि तदधो लग्नातु तुङ्गे कुचे
कृष्टेयं वलिभिस्ततोप्यतिरसा मग्नैव नाभीह्रदे ॥७०५॥

किं शीलेन मनोहरेण महता सद्वंशकत्वेन किं
किम्वा कामकलासु कौशलतया किं धन्यकान्त्यापरम् ।
वन्दे तत्परमार्थतः परमिदं भालेषु भव्याक्षरं
केलीकौशलकोविदोपि सखि यत्कुब्जावशो माधवः ॥७०६॥

शोणस्तन्वि तवाधरस्त्रिपथगा मध्ये सुमध्ये वलिः
कृष्णा कुङ्कुमगौरिरोमलतिका मन्ये समुद्रः करः ।
दृष्टिः सुन्दरि नर्मदास्मितमुखि त्वश्चन्द्रभागा स्वयं
तत्पीनस्तनबाहुदा भवसि चेत्तापस्तदा शाम्यति[1] ॥७०७॥

दक्षस्य

अयि हृदयाधिरूढकामानलधूमाधमनीपथैरुदस्थाः ।
चिकुराः कथमन्यथा सपत्नीनयनानाकुलयन्ति कातराणि ॥७०८॥

एकञ्चित्रमतीव दृष्टमिह यन्नालोकितं न श्रुतं
किं कस्मै कथयामि कस्य मनसि स्याद्वा मम प्रत्ययः ।
एकस्मिन्कनकस्य दाम्नि सरसीमैलन्दमत्तद्विप-
ज्योत्स्नाचन्द्रचकोरचक्रचमरीबालाश्रमत्कुर्वते ॥७०९॥

त्वं जानासि जनार्दनस्य हृदयं कुत्रास्ति लग्नं सखि
श्रुत्वा मे वद किं करिष्यसि परित्यक्तामि संभाषणम् ।
न स्थास्यन्ति तवासवः कथमपि स्थास्यन्तु यास्यन्तु वा
साधीयानसुनिर्गमोपि निविडप्रेमक्षयापेक्षया ॥७१०॥

मदनशरविखिन्नाऽप्यागतं प्राणनाथं
पुलकवलितगात्रा द्रष्टुमुत्तिष्ठतीव ।
गुरुजनगुरुलज्जाभारतो भज्यमाना
निजनयनयुगं तन्नाटयत्येव मध्या ॥७११॥

श्रीविद्याकरमिश्रस्य

नाथः स्वभावरसिकः प्रमदागुणोऽयं
जीयात्कदापि भविता मयि पक्षपातः ।

१—शोणस्तेऽधरपल्लवो मधुमती कान्तिर्गिरो नर्मदा
दृष्टिर्दिव्यतरङ्गिणीव वदनश्रीश्चन्द्रभागोपमा ।
गम्भीरा नलिनाक्षि नाभिरपि चेन्मद्देहदाहज्वर—
च्छेदाय क्षणमात्रमम्बुजमुखि त्वं बाहुदा मे भव—इति सदुक्तौ, पृ० १४७

एतस्य यत्सखि समस्तकलाविदोपि
ग्राम्या हरन्ति हृदयं तदयं विषादः ॥७१२॥

आस्यं पाणितले विलम्बय मनागेतावतापि स्फुटं
रक्ताम्भोरुहरोहिणीरमणयोरास्तां मिथः संगमः ।
मुग्धे किञ्च वचः प्रपञ्चय पिकी मौनव्रते वर्त्ततां
दाम्भिक्यं विजहातु पिञ्जरशुकी हीणातु वीणारवः ॥७१३॥

येन येन सुदृशा पथागतं तेन तेन तड़िदिन्दुविभ्रमः ।
यत्र यत्र पदमपर्यत्यहो तत्र तत्र शतपत्रसंशयः ॥७१४॥

अत्यादरेण निहितं मयि यद्भवत्या
तत्प्रेमहेम किमभूदिति नैव जाने ।
उत्सृज्य किन्तदिह पातकमुत्तराणि
प्राणा अपि प्रियतमे कतमे भवेयुः ॥७१५॥

बाबूमिश्रस्य

चतुरिकमलाकण्ठच्छेदो मनोभववञ्चनं
दृषदि मधुनो लिप्सा लोके विडम्बनमात्मनः ।
उपरि परितः प्रत्याशानां शिलाशतपातनं
सहचरि परीतापस्थानं जड़े हृदयार्पणम् ॥७१६॥

प्राणनारायणनृपस्य

आगते कुसुमधन्विनि तन्व्या मानसाद्बहिरभूत्कुचकोकः ।
तिष्ठतास्य सरसीरुहचक्षुः खञ्जनेन चकितं सहसैव ॥७१७॥

उचितं बन्धनमनयोः कुचयुगयोः केवलं तन्वि ।
युवजनमानसहाटकचौरविधौ पश्यतोहरयोः[१] ॥७१८॥

निरीक्षितेक्षिणो मृगाक्षिखञ्जनोऽतिलज्जितो
जितो गतैर्गजोपि कञ्जभर्त्सनाकरौ करौ ।

१—सुवर्णकारयोः, पक्षे दृष्टे सत्येव मनो हरति ।

मुखञ्च पूर्णशारदेन्दुजित्वरत्वसत्वरं
परन्तु दोष एष यत्पयोधरौ पयोधरौ ॥७१६॥

नीतं यदि नवनीतं नीतं नीतं हि किन्तेन ।
आतपतापितभूमौ माधव मा धाव मा धाव ॥७२०॥

शोभनताधिकगर्व्वतो वदनं गोपय मैव ।
अयि किं शरदि सुधाकरः पर्वण्युदयति नैव ॥७२१॥

भिखियामिश्रस्य

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥७२२॥

रविगुप्तस्य

## अथ वयस्सन्धिवर्णनम्

अस्या वपुषि तुलायां शैशवगुञ्जाथ यौवनं हेम ।
तुलयति कुतुकिनि कामे न नमति मध्यान्मनः सूचो ॥७२३॥

प्रस्तुताः क्वचन धूलिकेलयः क्वापि मन्मथकथाकलोदयः ।
एकतोपि सुतनोर्न चक्षणं पक्षपातमवलम्बते मनः ॥७२४॥

कवीन्द्रस्य

अचलच्चलदिव चक्षुः प्रकृतमपीदं समुद्यदिव वक्षः ।
अतदिव तदपि शरीरं सम्प्रति वामभ्रुवो जयति ॥७२५॥

शंकरमिश्रस्य

उरोभुवि न तुङ्गिमा न च गतागते चङ्गिमा
न वा वचसि वक्रिमा तरलिमा न तादृग्भ्रुवोः ।
तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटा
पटावृतमहामणिद्युतिरिवान्तरा लक्ष्यते ॥७२६॥

रामसरस्वत्याः

अबालरुचिरे भ्रुवौ न च मरालमन्दागति-
र्दृगञ्चलमचञ्चलं हृदयभूदभूतो दया।
सुधा न खलु वाक्पथातिथिरथापि यूनां मनो
मनोजशरजर्जरं नयति मोहमस्यास्तनुः ॥७२७॥

न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयोः
सुधायाः सध्रीची न च वचनवीची विरहते[1]।
कुचश्रीः कर्कन्धूफलमपि न बन्धूकृतवती
तथापि श्रीरम्या युवजनमस्या विजयते ॥७२८॥

नोरः कोरकितं स्वभावमधुरा वाचां न वा चातुरी
न व्रीडा निविडा न यद्यपि पदन्यासा विलासालसा।
जातः कोऽपि तथापि लोचनचमत्कारञ्चकोरीदृशः
कामो भ्रामयते यतः करतलन्यस्तं समस्तं जगत् ॥७२९॥

लक्ष्मीनाथस्य

नास्ये हास्यलवः सुधामधुरिमा दोलायितो वर्त्तते
वक्षो नोच्छ्वसितं गतागतपरिश्रान्ताः सुमेरोः श्रियः।
को वा वेद बहिर्भविष्यति कदाऽपाङ्गादनङ्गांशु(गो?)
विश्वन्तु स्मृतिजन्मना जितमिति व्यक्तः पुरो डिण्डिमः ॥७३०॥

गोन्दूशर्मणः

द्रुतं गन्तुं वाञ्छा परिणमति मत्तेभगमनं
विवक्षा रुक्षाणां मधुमधुरमुन्मीलति वचः।
दृशोर्विच्छेदेच्छा नटति नयनं निस्त्रपमिव
स्मरेण स्मेराम्भोरुहमुखि किमद्य व्यवसितम् ॥७३१॥

कविपतेः

तदेव किल कोमलं वपुरपूर्व्वमुद्भासते
तथैव हसितच्छटा स्मितकटाक्षिणी वीक्ष्यते।

१—परिचितेति पाठान्तरम्।

पुरेव ऋजुरेव गीरसरलेव संलक्ष्यते
किमद्य विजिगीषते विधिविधानमस्याः स्मरः ॥७३२॥

रामसरस्वत्याः

वक्रिमेव मम जायते दृशोर्म्मन्थरत्वमिव गाहते गतिः ।
वक्षसः कठिनतेव लक्ष्यते भेषजं भगिनि किं विधीयताम् ॥७३३॥

गदाधरस्य

चलदचलदपाङ्गं स्मेरमस्मेरमास्यं
गतिरहह किमस्या मन्थरामन्थरा वा ।
इति मनसि नितान्तं सन्दिहानो मनोभूः
करविनिहितबाणः संभ्रमादुद्भ्रमीति ॥७३३॥

दाक्षिणात्यस्य

अनाहूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पञ्चाली मिथुनमधुना सङ्गमयितुम् ।
उपादत्ते नो वा विरमति न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥७३५॥

मुरारेः

## अथ नवोढायाः

हस्ते धृतापि शयने विनिवेशितापि
क्रोडे कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥७३६॥

भानुदत्तस्य

भाषितापि मधुरं पराङ्मुखी
तूर्णमञ्चलधृताऽप्यसूयति ।

तोषिता कति. मया न भीषिता
सर्वथा नववधूर्न रज्यते ॥७३७॥
भिखाईकस्य

कान्तः करं स्पृशति जल्पति चाटुवाच-
मालोकते मुखमपाकुरुते दुकूलम् ।
इत्येव केवलमनङ्गविलासभीता
स्वप्नेपि पश्यति नवोढ़सरोरुहाक्षी ॥७३८॥
भानुदत्तस्य

क्रीड़ागारमुपागते प्रियतमे नम्रीकरोत्याननं
तत्प्रारम्भकथासु हन्त कुरुते कर्णे कराच्छादनम् ।
हन्त प्रार्थयति प्रिये सरभसं गूढ़ार्थमन्तर्गतं
स्थानं त्यक्तुमपीहते कृपणवत्प्रौढ़ो नवोढ़ाजनः ॥७३९॥
वसन्तमिश्रस्य

किं मिलति काकुवचनैः स्पर्शमणिः करसरोरुहाद्गलितः ।
अङ्काद्गतां नवोढ़ामङ्गुलिसंज्ञा किमानयति ॥७४०॥

आलीभिः परिबोधिता प्रियगृहस्यान्तं पुनः प्रापिता
कष्टासुष्टितया(?) नवोढ़वनिता संभर्त्सयन्ती निशाम् ।
अश्चल्लोचनकम्पमानहृदया कन्दर्पकेलीभया-
द्दोर्भ्यामिव सखीकरं धृतवती यत्नेन गन्तुं बहिः ॥४४१॥
श्रीविद्याकरमिश्रस्य

## अथान्तर्लापिका

किं भूषणम्वा मृगलोचनायाः का सुन्दरी यौवनदुःखभारा ।
धाता लिपिम्वा विदधाति कुत्र सिन्दूरबिन्दुर्विधवा-ललाटे ॥७४२॥

के भूषयन्ति स्तनमण्डलानि[1] कीदृश्युमा[2] चन्द्रमसः कुतः श्रीः[3] ।
किमाह सीता दशवक्त्रनीता हारामहादेवर- तात- मातः[4] ॥७४३॥

१—हाराः । २—महादेवरता । ३—तमातः—रात्रितः ।

सा चित्तं रमते क्व विश्वमनिशं प्रस्तौति कः कामतः
कः श्रेयान्सकलेषु जन्तुष महीजानाश्च रत्नाकरः ।
कस्य त्वं रमणी विलासकुशला धन्यस्य लक्ष्मीपरा
सर्वं ब्रूह्यधुनैव वामनयने ए माइ कोना कहू ॥७४४॥

का संज्ञाशिरसो वद स्वभुवने नृणां सदा वर्त्तते
वृक्षाणां बहुवाचिनामिति सदा कस्मिन्विभक्तौ पदम् ।
शम्भुम्मन्त्र(१)वर्त्तमानदिवसे भाषा भवेत्कीदृशी
का भाषादधिकस्य जीवसुखदा चूड़ा-मिठाई-दही ॥७४५॥

लक्ष्मीपतिशर्म्मणः

नीचाह्वानपदं किमत्र कथने भाषा पितुः का भवे-
त्का वा पुण्यकरी नदी भुवि सदा के दुःखशोकप्रदाः ।
किं बालान् बहु रोदिति प्रतिदिनं दन्ताहतो यो जनः
सर्व्वं ब्रूहि सुसत्वरं लघुतरं रे-बाप रे बापरे ॥७४६॥

श्रीविद्याकरमिश्रस्य

## अथ बहिर्लापिका

किं नश्येच्छिशिरे क्व सन्ति वनिता कास्ते मृगी वर्द्धिता
को वा बन्धुजनैः समं सुरगमत्को बुद्धिविश्लेषतः ।
का भाषा नभसः क्व सन्त्यहिगणाः सौमित्रिजीवप्रदः
कः का मुक्तिकरी सदाशुभकरीत्याद्यन्तलोपात्पठ' ॥७४७॥

श्रीचित्रपतिशर्मणः

सिंहः कस्य शिरोविदारणपरो मोहश्च कस्मिन् त्रपा
कस्या एव विनिर्गताथ सहसा कंसो हतः केन वा

१—मदनवकाओलि बोलि ।

कः शय्या च हरेः सुनीतिरहितः कः कुत्र पद्मोद्भवः
को वा स्त्रीजनरञ्जकोऽत्र भुवने मध्यं मुदा पठ्यताम्[1] ॥७४८॥

श्रीविद्याकरमिश्रस्य

किं सम्बोधनमेकवर्णरचितं विष्णोश्च कः प्रत्ययः
पित्सन्कामदुघादिसाधनकरो ग्रीष्मे धरा कीदृशी ।
किं खेदे च निरर्थके सकटगा सम्बोधने किं पदं
संसारेऽकवरप्रसिद्धिकथकं राज्यं च किं यावनम्[2] ॥७४९॥

केनाकारि भवो निषेधपरतः कामाह कान्तां हरेः
भूः सम्बोधनमत्र किञ्च विदितं को वात्र स्वप्नार्थकः ।
किम्वा दाशरथेर्भवेच्छुभतरं कृष्णस्य सम्बोधनं
किम्वा वल्गति रामभक्तिनिरतश्चान्तं पुनः पठ्यताम् ॥७५०॥

श्रीभोलानाथस्यादः पद्यम्

दध्युः किञ्च महीरुहा विलसिते प्राप्ते वसन्ते ऋतौ
किम्वा भूमितले वहन्ति वृषभा भूतोपकारक्षमाः ।
तन्वी भीमसुतास्वयम्वरविधौ जग्राह कं वा वरं
किं वक्ष्यन्ति महाजना धनगणैः किं तोषितं चार्जुनैः[3] ॥७५१॥

विद्याकरमिश्रस्य

## अथ नानारसपद्यानि

मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः ।
पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥७५२॥

शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः ।
कविना च विभुर्विभुना च कविः
कविना विभुना च विभाति सभा ॥७५३॥

१—जगत्तारिणी मां पातु । २—अकबरशाहआलमनसर। ३—दहनकुलम् ।

शीतेऽतीते वसनमशनं वासरान्ते निशान्ते
क्रीड़ारम्भः कुवलयदृशां यौवनान्ते विवाहः ।
जीर्णे देहे हरिचरणयोः सेवनं कर्तुमीहा
तोयेऽतीते सकलमफलं सेतुबन्धप्रबन्धः ॥७५४॥

पयोधेः सर्वस्वं शिरसि धृतवान् यन्नृपवरः
पणो यस्य क्षोणी चतुरुदधिवेला परिमिता ।
स एवायं दैवादुरणवणिजां पाणिपतितो
मणिर्मेषग्रीवाया(?)गुरणगुणबद्धो विहरति ॥७५५॥

पुरो वा पश्चाद्वा क्वचिदपि विशामः क्षितिपते
ततः किन्नश्छिन्नं वचनरचनाक्रीतजगताम् ।
अगारे कान्तारे कुचकलशहारे मृगदृशां
मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ॥७५६॥

रे मुक्ताफलजन्मभूमिरिति किं नोज्झस्वसे(?) वारिधं
तत्रापि क्षितिपालबालहृदये सौभाग्यमालप्स्यसे ।
दीपस्यार्च्चिषि कज्जलस्य वसतस्तादृग् न रोचिष्णुता
वातान्दोलितनीलनीरजदृशां नेत्राञ्चले यादृशी ॥७५७॥

उज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखीवर्त्तिः प्रदीपशिखया यथा ॥७५८॥

मन्दिरतिमिरमपाकुरु दीप हिमांशुं किमाक्षिपसि ।
भवनाद्बहिर्म्मनागपि पवनात्परिशीलयात्मानम् ॥७५९॥

धीरेन्द्रोपाध्यायस्य

ज्योतिरिङ्गण कथन्न लज्जसे खेचराभिशि तमोपशान्तये ।
इत्थमेव बहु किन्न मन्यसे यत्त्वमेव तिमिरेषु लक्ष्यसे ॥७६०॥

चित्रधरोपाध्यायस्य

दूरे तिष्ठ मृदो वृकोदर निजोदारोदरं पूरये-
र्बालौ स्तः कुरुतं किशोरचरितं मा सम्मुखे तिष्ठतम् ।
भूयः शिक्षितभार्गवीयविलसच्छस्त्रैकमित्रस्य मे
निर्य्यद्बाणपरं परामनुभवत्येकोऽधुना फाल्गुनः ॥७६१॥

तस्यैव

किं मां निरीक्षसि घटेन कटिस्थितेन
वक्त्रेण चारुपरिमीलितलोचनेन ।
अन्यं निरीक्ष पुरुषं तव कर्म्मयोग्यं
नाहं घटाङ्कितकटीं प्रमदां स्पृशामि ॥७६२॥

कालिदासस्य

सत्यं ब्रवीमि मकरध्वजबाणपीड
नाहं तदर्थमनसा परिचिन्तयामि ।
दासोऽद्य मे विघटितस्तव तुल्यरूपः
सो वा भवेन्नहि भवेदिति मे वितर्कः[1] ॥७६३॥

लखिमाठक्कुराज्ञ्याः

पर्णानि स्वर्णवर्णानि सीदन्त्याकर्णलोचने ।
चूर्णमानीयतां तूर्णं पूर्णचन्द्रनिभानने ॥७६४॥

कालिदासस्य

विना खदिरसारेण हारेण हरिणीदृशाम् ।
जायते नाधरे रागो नानुरागः पयोधरे ॥७६५॥

भवभूतेः

रम्भाविस्तीर्णपत्रं सुललितवदना लीलया दीयमानं
शाल्यन्नं मुद्गसूपं बहलघनघृतं घण्टिकासार्द्धखण्डम् ।

१—किं मामिति पद्यस्य प्रत्युत्तरमिदं पद्यम् ।

पाटोलङ्कारबीजं तड्तिं(?)चसुची· रोहितञ्चारमम्लं
का संख्या व्यंजनानां सगुड़दधिवरा भोजनान्ते पयश्च ॥७६६॥

भक्तं पाँडरिपुष्पवर्णसदृशं किञ्चिद्युषैर्वर्जितं
सूपस्तत्र न विद्यते न च घृतं दूरीकृतं व्यञ्जनम् ।
स्वप्नेनापि न श्रूयते दधिकथा दुग्धस्य वार्ता कुत-
स्त्वेतेनैव विशुद्धनिर्म्मलवपुः पेपीयते काञ्चिकम् ॥७६७॥

पृथुकः कीरतनूरुहहरितः शर्क्करया पयसा दधियुक्तः ।
तरुणीकरकमलैरुपनीतः कस्य जनस्य न कर्षति चेतः ॥७६८॥

गोधूमचूर्णचयचारुसुधाकराभा
माषप्रकारलवणार्द्रकहिङ्गुगर्भा ।
हैयंगवीनकरमर्दितकोमलाङ्गी
'रोटी' मुखे वसतु पुण्यवतां जनानाम् ॥७६९॥

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्[१] ॥७७०॥

जातः शूली कदशनवशाद्भैक्ष्ययोगात्कपाली
वस्त्राभावाद्दिगतवसनः स्नेहशून्याज्जटावान् ।
युष्मत्सेवापरिचयवशादीश्वरत्वं मयाप्तं
को वा हेतुर्म्मम नरपते नार्द्धचन्द्रन्ददासि ॥७७१॥

जलमानं कियद्विप्र जानुदघ्नं नराधिप ।
तथापीयमवस्था ते नहि सर्व्वे भवादृशाः[२] ॥७७२॥

रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
इत्थं शीतं मया नीतं जानुभानुकृशानुभिः ॥७७३॥

१—प्राचीनमेतत् पद्यम् । सदुक्तिकर्णामृतेऽपि कस्यचिदेतदेवोक्तं कविना, पृ० ३१० । २—भोजकालिदासयोरिति कश्चित् ।

अनुकूले विधौ देयं यतः पूरयिता हि सः ।
प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥७७४॥
रघुनाथोपाध्यायानाम्

इयमकबरशाही कालिदासाननेन्दु-
स्रवदमृतरसास्यामाप्लुतानो यदि स्यात् ।
कवयदुरगराजभ्राजमाना·······जि
प्रबलगरलजालज्वालया गीर्न जीवेत् ॥७७५॥

हे गोदावरि देवि तावकत············कवि-
वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विमुक्तिं गतः ।
एनामर्णवमध्यसुप्तमुरजीन्नाभीसरोजालये(?)
ब्रह्माणं गम··········व कानी(?) स्थास्यति ॥७७६॥

देवीम्वाचमुपासते हि बहवः सारन्तु सारस्वतं
जानीते नितरामसौ कुलगुरुक्लिष्टो:मुरारिः कविः ।
अब्धिर्लंघित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥७७७॥
मुरारिमिश्रस्य

मातर्गोकुलनाथनामकगुरोर्वाग्देवि तुभ्यन्नमः
पृच्छामो भवतीं महीतलमिदं त्यक्त्वैव यद्गच्छसि ।
भूलोके वसतिः कृता मम गुरौ स्वर्गे तथा गोष्पतौ
पाताले फणिनायके भगवति प्रौढ़िः क्व लब्धा पुनः ॥७७८॥
रामेश्वरशर्म्मणः

कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलमेन ।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥७७९॥

अभूत्प्राची पिङ्गा रसपतिरिव[1] प्राश्य कनकं
गतश्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।

१—रसपतिः पारदः ।

परिक्षीणास्तारा नृपतय इवानुद्यमपरा[1]
न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥७८०॥
भोजकालिदासयोः

तावद्विद्याऽनवद्या प्रभवति विदुषांतावदाचारधारा
तावद्गाम्भीर्य्यशौर्य्यं मधुरमधुरिमाडम्बरो वाग्विलासाः ।
यावत्पाकाधिकाराकुलितकुलवधूप्रेषितापत्यवक्त्रा-
द्धे बाब्[2] नास्ति तैल्यं न च लवणकणेत्यादिवाचां प्रचारः ॥७८१॥

देवाज्ञापय किं करोमि सहसा लङ्कामिहैवानये
जम्बूद्वीपमितो नये किमथ वा वारां निधिः शोषये ।
हेलोत्पाटितविन्ध्यमन्दरगिरिस्वर्णत्रिकूटाचल-
प्रक्षेपैर्भुवि वर्द्धमानसलिलं बध्नामि वारां निधिम् ॥७८२॥
सुग्रीवोक्तिः

श्वशुरकुलनिवासः स्वर्गतुल्यो नराणां
यदि भवति विवेकी पञ्च वा षट् दिनानि ।
दधिमधुघृतलोभान्मासमेकं वसेद्यः
स भवति तृणतुल्यो मानवो मानहीनः ॥७८३॥

अयि कुलनिचूलमूलोच्छेदनदुःशीलवीचिवाचाले ।
बकविघसपङ्कसारा न चिरात्कावेरि भवितासि ॥७८४॥

मालतीमुकुले भाति गुञ्जन्मत्तमधुव्रतः ।
प्रयाणे कामदेवस्य[3] शंखमापूरयन्निव ॥७८५॥

## अथ कीर्त्तिवर्णनम्

त्वत्कीर्त्तिव्रततिः समीरपदवीमासाद्य लोकत्रयं
मञ्चं(?)व्याप्य बभार चारुकलिका नक्षत्ररूपेण या ।

१—उद्योगशून्याः । २—पितुर्व्यावहारिकसम्बोधनशब्दः । ३—पञ्चबाणस्येति पाठान्तरम् ।

तासां प्रस्फुटमेकमिन्दुकुसुमं त्रैलोक्यमादीपय-
न्नो जाने विकचासु तासु भविता सर्व्वासु कीदृक्फलम् ॥७८६॥

त्वत्कीर्त्तिमौक्तिकफलानि गुणैस्त्वदीयैः
संगृहितुं[1] विबुधवामदृशः प्रवृत्ताः ।
नान्तो गुणेषु न च तेष्वपि छिद्रलेशो
हारो न जात इति ताश्च मिथो हसन्ति ॥७८७॥

ध्वान्तस्तोममसीं समालभनतः श्यामायमाने नभः-
पट्टे भास्करभाविते शशिशिलाखण्डेन संघट्टिते ।
नक्षत्रच्छलतोऽक्षरावलिमुपाधायाभितो मृण्मयीं(?)
धाताऽध्यापयति ध्रुवं प्रतिनिशं त्वत्कीर्त्तिगाथाः सुरान् ॥७८८॥

आनन्दकरमिश्रस्य

त्वत्कीर्त्तितरणिष्कापि धीवराकर्षिता सती ।
गुणेनाकलिता गच्छत्यजलेषु जलेषु च ॥७८९॥

विद्याकरमिश्रस्य

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥७९०॥

कर्करजस्य[2]

तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥७९१॥

श्रीहर्षस्य

प्रभो रा(म?)नारायण त्वं सुधांशुः
समुद्रोऽथ देवद्रुमो वेति लोकाः ।

१—सन्दर्भितुमिति भाण्डागारपाठः, पृ० १४० । २—इति तु सदुक्तौ, पृ० २१६ ।

निरङ्कुशोऽथ लक्ष्मीपतिर्वाक्प्रवीणः
स्तुवन्तीति मान्या भवन्तीति लोके ॥७६२॥

आनन्दकरमिश्रस्य

अपटः कपटी हिमहीनरुचिः प्रथितः पशुरन्यकलत्ररतः।
तव राय(?)वसन्तसमो न हरो न हरिर्न हरिर्न हरिर्न हरिः ॥७६३॥

प्रत्येकं मुखकोटयः प्रतिमुखं जिह्वासहस्रं तथा
जिह्वाग्रेषु सहस्रधा यदि वसेद्देवी स्वयं शारदा।
लोकश्चेत्सकलो विरञ्चिसदृशः स्तोतुं तदा शक्यते
युष्माकं कुलकीर्त्तिकान्तिकवितापाण्डित्यशीलादिकम् ॥७६४॥

सर्वदा सर्वदस्त्वं हि मिथ्या संस्तूयसे जनैः।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥७९५॥

शत्रवः खड्गभूतास्ते धैर्य्यनारायण[1] ध्रुवम्।
यतः कोषं समुत्सृज्य करस्वीकारिणोऽभवन् ॥७९६॥

विद्याकरमिश्रस्य

कल्पवृक्षो न जानाति न ददाति बृहस्पतिः।
माधवो[2] मिथिलाधीशो जानाति च ददाति च ॥७९७॥

तस्यैव

सज्जघनः श्रावण इव शशधरवद्वलक्ष[3]मोदितश्रीकः।
राजति(?) सदानवारिः सुरतरुरिव माधवो भूपः ७९८॥

श्रीविद्याकरमिश्रस्य

उपवीणयन्ति परमप्सरसो नृपमानसिंह तव दानयशः।
सुरशाखिमौलिकुसुमस्पृहया नमनाय तस्य यतमानतमाः ॥७९९॥

अनिरुद्धशर्म्मणः

---

१—धैर्य्यनारायणो नाम कश्चिन्मिथिलादेशाधिपतिर्बभूव। २—माधवो नाम मिथिलाधीशोऽष्टादशशतकख्रीस्ताब्दे मिथिला शशास। ३—वलक्षो धवलोऽर्जुनः।

त्वयि पर्वसु कुशपाणौ पयसि फतेशाह[1] लीयते मेरुः ।
कथमन्यथोच्छलन्ति प्रथितिपूर्णिममर्णवार्णांसि ॥८००॥

गोकुलनाथोपाध्यायस्य

राजन् कनकधाराभिस्त्वयि वर्षति सर्वदा ।
अभाग्यच्छत्रसम्पन्ने मयि नायान्ति बिन्दवः ॥८०१॥

असिधारापथे नाथ शत्रुशोणितपिच्छिले ।
आजगाम कथं लक्ष्मीर्निर्ज्जगाम कथं यशः ॥८०२॥

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः[2] समायाति गुणो याति दिगन्तरम् ॥८०३॥

अमृतदत्तस्य

गुरुरेकः कविरेकः सदसि मघोनः कलाधरोऽप्येकः ।
अकबरशाहसभायां गुरवः कवयः कलाधराः सर्वे ॥८०४॥

मुखे हारावाप्ति[3]र्नयनयुगले कङ्कणभरो
नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् ।
अरण्ये श्रीकर्ण त्वदरिवनितानां विधिवशा-
दपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥८०५॥

काकवराकमरालमवैषि न जर्जरिताज्जुनताय्र्य कुतः ।
विक्रमवैरिवधूजनलोचनकज्जलवज्जलमज्जनतः ॥८०६॥

का त्वं पुत्रि नरेन्द्र लुब्धकवधूर्हस्ते किमेतत्पलं[4]
क्षामं किं सहजं ब्रवीमि नितरां यद्यादराच्छ्रूयसे ।
गायन्ति त्वदरिप्रियाश्रुतटिनीतीरेषु मुग्धाङ्गना[5]
गीतान्धा न तृणं चरन्ति हरिणास्तेनामिषं दुर्बलम् ॥८०७॥

---

१—फतेशाहस्तु गढ़वालाधीश्वरो यस्य संभापण्डितो मैथिलो गोकुलनाथोपाध्यायः । २—मार्गणानामोघः । याचकाना समूहः, पक्षे बाणाः । 'वनीयको याचनको मागणो याचकार्थिनौ'—'कलम्बमार्गणशराः' इत्युभयत्रामरः । ३—'हा' इति रावस्या. वाप्तिरिति भावः । ४—मांसम् । ५—'सिद्धाङ्गनाः' इति पाठान्तरम् ।

किं नन्दी किं मुरारिः किमिह रतिपतिः किं नलः किं कुवेरः
किम्वा विद्याधरोऽयं किमिह शुचिपतिः किं विधुः किं विधाता ।
नायं नायं न चायं नहि न खलु न वा नापि नासौ न चैषः
क्रीडां कर्त्तुं प्रविष्टः स्वयमिह भुवने भूपतिर्भोजदेवः ॥८०८॥

उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति ।
अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥८०९॥

शोणान्ते वीक्ष्य दृक्कोणं दिक्कोणं को न गच्छति ।
करे कलितकोदण्डं को दण्डं न प्रयच्छति ॥८१०॥

प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्त्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियश्च
दत्त(?)त्रयं जगति पुण्यकृतो लभन्ते ॥८११॥

राजन्नभ्युदयोऽस्तु दल्लनकवे किं पत्रिकायामिदं
काव्यं कस्य कवेरमुष्य कृतिनस्तत्पठ्यतां पठ्यते ।
किन्त्वासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलना-
दुद्वेल्लद्भुजवल्लिकंकणझणत्कारः क्षणं वर्ज्जताम् ॥८१२॥

दल्लनकवेः (?)

रे चित्त चिन्तय चिरं चरणौ मुरारेः
पारं गमिष्यसि यतो भवसागरस्य ।
पुत्राः कलत्रमितरे सुहृदः सखायः
सर्वं विलोकय सखे मृगतृष्णिकेव ॥८१३॥

सचलमिश्रस्य

किमासनन्ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय ।
लक्ष्मीकलत्राय किमस्ति देयं वागीश किन्ते वचनीयमस्ति ॥८१४॥

रत्नाकरो हि भवनं गृहिणी च पद्मा
देयं किमस्ति भवते जगदीश्वराय ।

राधागृहीतमनसो ॰ मनसोऽस्ति दैन्यं
दत्तं मया निजमनस्तदिदं गृहाण ॥८१५॥

लखिमाठक्कुराज्ञ्याः

आर्त्तस्य मे विलपितं जगदन्तरात्मन्
पश्यन्न पश्यसि परं न शृणोषि शृण्वन् ।
दुर्दैवकुम्भजनुषा ननु साम्प्रतं मे
पीतस्त्वदीयकरुणावरुणालयोऽपि ॥८१६॥

गोकुलनाथोपाध्यायस्य

ध्रुवं विचित्रागतिरस्ति दैवजा न यत्र सामर्थ्यमुपैति पौरुषम् ।
तमांसि निघ्नन्नपि भानुमानयं कुहेलिकाभिः परिभूयतेतराम् ॥८१७॥

स्नेहं विमुच्य सहसा खलतां भजन्ते
ये गाढपीडनवशान्न वयं तिलास्ते ।
अस्मानवेहि कलमाननमाहतानां
येषां प्रचण्डमुसलैरवदाततैव ॥८१८॥

मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे ।
नरः प्रत्युपकारार्थी विपत्तिमधिकांक्षति ॥८१९॥

सचलमिश्रस्य

सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता ।
अभूत्तदीयव्रतभङ्गशङ्कया[1] हुताशनश्चन्दनपङ्कशीतलः ॥८२०॥

सिन्दूरबिन्दुर्मार्तण्डोदयस्थानविभूषितम् ।
अलंघ्य युवचेतोभिः स्त्रीमुखं पर्वतोपमम् ॥८२१॥

सजलमेघघटाघटितेऽम्बरे
वहति शीतलमन्दसमीरके ।

१—'तदा ह्यसौ तद्व्रतशक्तिपीडितः' इति भाण्डागारपाठः, पृ० १८९ ·

अवधिवासरहीनपतिव्रता
दिवसचन्द्रमुखी स्वगृहं गता ॥८२२॥
पद्यद्वयं विद्याकरमिश्रस्य

सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने ।
तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥८२३॥

आचारधाराधवलीकृतानां राधाधवाराधनमानसानाम् ।
विद्याविवेकोन्नतिभूषितानां भवादृशानामिह का प्रशंसा ॥८२४॥

पूर्वं कर्ण कृपेण किन्तु बलिना श्रीविक्रमार्केण वा
भोजेनाथ दधीचिना वसुमती यासीत्परानन्दिता ।
सेयं सम्प्रति राजभिः परिवृताऽप्येकेन धर्म्मात्मना
भूयः श्रीरघुनाथचारुकृतिना स्फीता पुनीता बभौ ॥८२५॥

बहुविधजगदण्डभारभर्त्तुर्नहि महिमानमहन्तवावगच्छे(?) ।
मसक इव स लाङ्गगर्भजन्मा(?) विटपिबृहत्त्वमुदुम्बरद्रुमस्य ॥८२६॥
पद्यद्वयं गोकुलनाथोपाध्यायस्य

जननि तव पुमर्था एव पादाः प्रथन्ते
प्रथमचरणबद्धो निर्भरं रौमि वत्सः ।
चरमचरणमूलप्रस्नुतां स्तन्यधारा-
ममरगवि कदा ते मुक्तबन्धः पिबेयम् ॥८२७॥
अमृतोदये गोकुलनाथोपाध्यायस्य

केचिद्वदन्त्यमृतमस्ति पुरे सुराणां
केचिद्वदन्ति वनिताधरपल्लवेषु ।
ब्रूमो वयं सकलशास्त्रविचारदक्षा
जम्बीरनीरपरिपूरितमत्स्यखण्डे ॥८२८॥

वटनिकटमटन्तं मामियं गोपनारी
विजनमपि जुहावाहं गतस्तत्र मातः ।

इति वदति मुरारौ वक्त्रसंचुम्बनेन
स्थगितहरिवचोभिः पातु गोपीजनेन ॥८२९॥

लज्जा कीर्त्तिर्ज्जनकतनया शैवकोदण्डभङ्गे
तिस्रः कन्या निरुपमतया भेजिरे रामचन्द्रम् ।
अन्त्या पाणिग्रहणसमये ज्यायसी जातकोपा
भूपैः सार्द्धं किल गतवती मध्यमाथो दिगन्तम् ॥८३०॥

मनोभूमौ जाता प्रकृतचपलायां विधिवशा-
त्सखे सम्वर्द्धव्या विविधगुणपुष्पप्रसविनी ।
तथा संसेक्तव्या स्मरणसलिलेनानुदिवसं
यथा नेयं म्लानीभवति मृदुला स्नेहलतिका ॥८३१॥

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥८३२॥

योगेश्वरस्य

## अथ गङ्गावर्णनम्

चन्द्रद्युतिशीतलवारितया दैतेयसुरैः परिवारितया ।
अंहोगजदारणकेसरितामेते गमिता न हि के सरिता ॥८३३॥

गोकुलनाथोपाध्यायस्य

बालक इव परिपालितपातकनिचयः प्रयत्नतो बहुशः ।
त्वद्दर्शनेन नष्टो मन्दाकिनि डाकिनी भवसि ॥८३४॥

रामेश्वरशर्म्मणः

रे कुरु पातकमखिलं भयमिह नैव ।
विलसति जह्नुसुता यदि भूमिगतैव ॥८३५॥

तस्यैव

दहनशिखाधोगतिरियमुदिता कापि ।
प्रदहति पातकतरुवरमतिशीतापि ॥८३६॥

चित्रधरोपाध्यायस्य

त्वत्पाथःपरमाणुपूतवपुषं दृष्ट्वा ममायं पति-
स्तुत्यालापवती शची गिरिसुता पद्मनाभ ब्रह्मप्रिया ।
अन्योन्यं रुषिता करोति कलहं कर्त्तुं समालिङ्गनं
तत्किं जाह्नवि नारदीं कृतवती वृत्तिं सदा वर्त्तसे ॥८३७॥

आनन्दकरमिश्रस्य

रङ्कं त्वत्पङ्कलिप्तं सुरनगरसरित्त्वत्पयः पानपूतं
पश्यन्तीनामनन्तामरजलजदृशां चित्तजन्माकुलानाम् ।
अग्रेऽप्यग्रे सरस्याममरनगरसदां व्योमयानस्थितस्य
व्यस्ताहस्तारविन्दैरपि यदपि धृता नीरयो विस्खलन्ति ॥८३८॥

तस्यैव

यदा मनुष्याः प्रचलन्ति गङ्गां रुदन्ति पापानि वदन्ति किं चित् ।
अहो कृतघ्नाः पुरुषा हि लोके स्वयं कृतान्येव विनाशयन्ति ॥८३९॥

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्भश्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।
भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्म्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥८४०॥

काशीतो बहिरिच्छा गन्तुं यस्य ।
मूढशिरोमणिगणने रेखा तस्य ॥८४१॥

## अथ संकीर्णपद्यानि

भिक्षो मांसनिषेवणं प्रकुरुषे किन्तेन मद्यम्विना
मद्यञ्चापि तव प्रियं कथमहो[1] वाराङ्गणाभिः सह ।

१—'प्रियमहो' इति भाण्डागारपाठः, पृ० ६४

वेश्या द्रव्यरता कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवता नष्टस्य कान्या गतिः ॥८४२॥

कस्त्वम्भोः कविरस्म्यहो कथमथ क्षीणोऽस्यनाहारतो
धिग्देशं गुणिनोऽपि दुर्गतिरियं देशं न मामेव धिक् ।
पाकार्थी क्षुधितो यदैव विदधे पाकं तदा दुर्विधे-
र्विन्ध्ये नेन्धनमम्बुधौ न सलिलं नान्नं धरित्रीतले ॥८४३॥

विद्या सत्कविता विदेशवसतिस्सेवा तथा[1] प्रार्थना
पञ्चैताः परिनिन्यिरे जनयितुं वित्तात्मजं यत्नतः ।
व्यापारं सकलं विहाय नितरां तत्रैव रेमे मुहुः
किं कुर्म्मः कुटिलाशयेन विधिना पञ्चापि बन्ध्याः कृताः ॥८४४॥

नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यथा मानसं
सारङ्गा जलदं यथा वनगजा ध्यायन्ति रेवाजलम्[2] ।
युष्मद्दर्शनलालसाः प्रतिदिनं नान्यं स्मरामो वयं
धन्यः कोपि स वासरो हि भविता यत्रावयोः सङ्गमः ॥८४५॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न चलति विधिवश्या भाविनी कर्म्मलेखा[3] ॥८४६॥

चक्रे येन जितेच्छया वपुरिदं शुक्रासृजोरैक्यतः
प्राणास्तत्र निवेश्य येन जठरे रक्षा कृता वह्नितः ।
दत्तं येन च जन्मकर्म्मलयनं सोऽद्यापि भारक्षमः
कोऽस्मान्पालयतीति चिन्तनपरैर्लोकैर्वृथा भूयते ॥८४७॥

१—'तथा सुजनता सेवाऽपि चेति पाठान्तरम्। २—'सानन्दाः स्फुटपल्लकी वनयुतां ध्यायन्ति रेवां गजाः' इति भाण्डागारपाठः, पृ० ३०४। ३—न भवति पुनरुक्तं भाषितं सज्जनानामिति पाठान्तरम् ।

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्य्यस्य किं दूषणम् ।
वर्षा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्ज्जितुं कः क्षमः ॥८४८॥

वाहव्यूहखुरव्रणैर्वसुमतीं[1] सम्वीक्ष्य मूर्च्छावतीं
भेरीझांकृतिचञ्चलेन पयसा वारां निधिः सिञ्चति ।
दिग्बाला तनुते निजामनृपतेर्वातं पताकांशुकै-[2]
र्द्धूलीधोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥८४९॥

उद्घाट्योद्घट्यघटा(?)तटमटति नटन्त्वद्भटं टापटङ्क-
प्राकट्यस्फट्यमानस्फुटविकटमटत्कोरकोटिस्फटीशः ।
लाटीलुण्टाकघण्टाघटघटितघटोद्घुष्टपुष्टाङ्गचेष्टा-
विश्लिष्टस्पष्टनष्टप्रतिभटपटलत्रोटको घोटकोऽयम् ॥८५०॥

प्रस्थाने तव वाजिराजिचरणक्षेपक्षणक्षोभित-
क्षोणीक्षोदकृतक्षपेशमुदितच्छत्रक्षयप्रत्ययोः ।
वारम्वारमुदारवारणघटागण्डस्थलप्रोच्छल-
न्मत्तालिध्वनितालिका विदधते कृष्णा इवाष्टौ दिशः ॥८५१॥

शैलेयो नाभिनेयो गुरुरगुरुरसौ नापगेयोपनेयो
.....नाभिधेयो न खलु हरिहयो हैहयो नेह योग्यः ।
अन्यत्किं धन्यमातन्वति भवति धनुर्द्दण्डमुद्दण्डमुद्य-
द्गाण्डीवग्रन्थिगण्डस्थलमपि गणये पाण्डवम्पाण्डमेव ॥८५२॥

बुधमतिरिव बहुलो हा सुघटितचक्रा प्रभातवे... ।
.................................... ॥८५३॥

१—खुरक्षतां वसुमतीमिति भाण्डागारपाठः, पृ० १२० । २—निजामशाहस्य वर्णनमस्मिन् पद्ये ।

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥८५४॥

कालिदासस्य

अधिगगनमनेकास्तारका राज्यभाजः[1]
प्रतिगृहमिह दीपा दर्शयन्ति प्रभुत्वम्[2] ।
दिशि दिशि विलसन्तः[3] सन्ति खद्योतपोता-
स्सवितरि उदितेऽस्मिन्[4] किन्नु लोकैर्व्यलोकि ॥८५५॥

निधाय तापं शिरसाऽतिदुःसहं
छायाधनैः पान्थजलान्प्रमोदयन् ।
निदाघकाले स्पृहणीयसम्भवं
यशः समग्रं वट एव गच्छति ॥८५६॥

संकेतनिकेतनोन्मुखी दयिताकरतर्ज्जनीव कविसूक्तिः ।
दृष्टमपि दर्शयन्ती रमयति चेतांसि चतुराणाम् ॥८५७॥

राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वं
नागा नागात्मजार्द्धं न भसितधवलं यद्वपुर्भूषयन्ति ।
मा रामारागिणी भून्मतिरिति यमिनां येन वोऽदाहि मारः
सप्ताः सप्ताश्वतुन्नारुणकिरणसमाः पातु विभ्रत्त्रिनेत्रः ॥८५८॥

तरावालोलायां भयचकितगोपालतरुणी
दृगन्तैरुन्मीलन् कुवलयदृशः श्रेणिसुभगैः ।
हठादापूर्णायां तरणितनया नीरनिवह-
भ्रमेणावक्षेप्तुं कृतकरपुटो रक्षतु बहिः ॥८५९॥

१—राजमानाः—२—प्राप्नुवन्ति प्रतिष्ठाम्—३—विकसन्तः—इति सर्वे भाण्डा-गारपाठः, पृ० २११ । ४—'परिभूते' इति पाठान्तरम् ।

मित्रोदयेऽपि कुमुदिनि विहससि नैव ।
दोषाकरे विकाशं वहसि सदैव ॥८६०॥

मोहनशर्म्मणः

अच्युतस्नेहपूर्णा भवति हि यैव ।
दीपशिखेवोज्ज्वलिता जीवति सैव ॥८६१॥

अपि पतिकरकलितायाः अतिरसिकेन ।
पीयत एव नलिन्या मधु मधुपेन ॥८५४॥

आयातो वनमाली गृहपतिरालि समायातः ।
स्मर सखि पाणिनिसूत्रं 'विप्रतिषेधे परं कार्य्यम्' ॥८६२॥

बाल्याधिपे हन्त प्रयातुकामे
त्वागन्तुकामे नवयौवनेशे ।
ह्रीभीमदः कामविकाशलक्ष्मी-
रन्योन्यमालुण्ठति नेत्रमस्याः ॥८६३॥

हे कृष्ण राधानयनं विभाति
त्वद्दर्शनप्रेमनिमेषशून्यम् ।
कोषाद्विनिष्काशितवान्स्वखड्गं
जेतुं त्रिलोकं किमु कामराजः ॥८६४॥

स्मितं मन्दमन्दं कुचस्पर्शकाले
मनोहारि शोभाहरं पङ्कजानाम् ।
इदानीं परीहासवाक्येषु जाड्यं
गुडं दर्शयित्वेष्टकाभिर्नं ताड्यम् ॥८६५॥

नारब्धं स्तनपरिरम्भणेषु वाम्यं
नैवोक्तं मुखपरिचुम्बनेऽपि किञ्चित्[1] ।

---

१—वैमुख्यं किमपि न चुम्बने कदाचिदिति भाण्डागारपाठः, पृ० १२७

किं नीवीगतमबले रुणत्सि पाणिं
विक्रीते करिणि किमङ्कुशे विवादः ॥८६६॥

आगतासि यदि मन्दिरमध्ये का तदा सन्निधिभूमौ ।
...............नर्तने किमवगुण्ठनवासः ॥८६७॥

राजन् राजकुलप्रतीपसकलक्ष्मापालचूडामणे
युक्तं संचरणं तवात्र भवति च्छत्रेण रात्रावपि ।
मा भूत्त्वद्वदनावलोकनवशाद्व्रीडावनम्रः शशी
मा भूच्चेयमरुन्धती भगवती दुःशीलिताभाजनम् ॥८६८

लोकानां गदशान्तये भुवि मुहुः स्वर्वासिनां मन्त्रणे
ब्रह्मेशोऽपि कमण्डलुः श्रवणतो धुस्तूरपुष्पं ददौ ।
दैत्यारिर्मुरली च वह्निवरुणौ तत्रावतीतौ(र्णौ?) ततो
वीणाभिर्ननु नारदो हरिरितिर्ब्रह्माक्षरं गीयते ॥८६९॥

उषापतिमुखाम्भोजे नरीनर्त्ति सरस्वती ।
ऋतुराजकवेरेव गायन्ती गुणगौरवम् ॥८७०॥

घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं
वने वासः कन्दाशनजनितदौस्थ्यं वपुरपि ।
तथाऽप्येकोऽगस्त्यः पिबति सकलं वारि जलधेः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥८७१॥

विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाऽप्येको रामः सकलमजयद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥८७२॥

रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणरहितः सारथिरपि ।

रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥८७३॥

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
तथाऽप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥८७४॥

विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो
वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः ।
तथाऽपि त्रैलोक्यं जयति मदनो देहरहितः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥८७५॥

सर्वस्य द्वे सुमतिकुमती सम्पदापत्तिहेतू
एको गोत्रे स भवति पुमान् यः कुटुम्बं बिभर्त्ति ।
वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः
स्त्रीपुम्वच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥८७६॥

हस्तन्यस्तकुशोदके त्वयि न भूः सर्वंसहा वेपते
देवागारतयैव काञ्चनगिरिर्द्धत्ते न चित्ते भयम् ।
अज्ञातद्विपभित्त्वभिक्षुभवने दौस्त्यानवस्थाशया[1]
वेपन्ते मददन्तिनः परममी भूमोपते तावकाः ॥८७७॥

नमत्कमठकर्प्परं[2] स्खलदनन्तदन्तावली
त्रुटत्कपटशूकरोद्भटविशालदंष्ट्राङ्कुरम् ।
वलत्सुरकरीश्वरप्रगटकुम्भमुक्ताफलम्
भ्रमस्फुर(?)कुलाचलं किल चचाल सा वाहिनी ॥८७८॥

वैद्यं पानरतं नटं कुपठिनं स्वाध्यायहीनं द्विजं
योधं कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् ।

१—भिक्षुककुलावस्थानवृत्याशयेति पाठान्तरम् । २—स्यात्कर्परः कपालोऽस्त्रीत्यमरः ।

राजानं च कुमन्त्रिभिः परिवृतं देशं च सोपद्रवं
भार्यां यौवनगर्वितां पररतां मुञ्चन्ति शीघ्रं बुधाः ॥८७९॥

प्रोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः ॥८८०॥

नागो भाति मदेन कं[1] जलरुहैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन[2] तुरगो नित्योत्सवैर्म्मन्दिरम्।
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं त्वया वसुमती लोकत्रयं विष्णुना ॥८८१॥

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्।
सत्यश्चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किं[3]
व्रीडा चेत्किमु भूषणेन कविता[4] यद्यस्ति राज्येन किम् ॥८८२॥

भर्तृहरेः

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्य्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥८८३॥

भर्तृहरेः

मृगमीनसज्जनानां
तृणजलसन्तोषविहितवृत्तीनाम्।
लुब्धकधीवरपिशुना
निष्कारणवैरिणो[5] जगति ॥८८४॥

भर्तृहरेः

१—जलम्। २—वेगेन। ३—किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदीति पाठान्तरम्। ४—भूषणैः सुकवितेति पाठान्तरम्। ५—निष्कारणमेवेति पाठान्तरम्।

न कोपि चातुश्चरणे समर्थो न राजतीयासु तुलासु योग्यः ।
तवैव धीरेन्द्रगुणैरुदारैर्विराजते सम्प्रति तीरभुक्तिः[1] ॥८८५॥

हल्लीशर्म्मणः

स्वतः प्रमाणं परतः प्रमाणं
शुकाङ्गना यत्र विचारयन्ति ।
शिष्योपशिष्यैरभिसेव्यमान-
मवेहि तन्मण्डनमिश्रधाम[2] ॥८८६॥

विद्यारण्यस्य

याता सा यत्र सीता सरिदमलजला वाग्वती यत्र पुण्या
यत्रास्ते सन्निधाने सुरनगरनदी भैरवो यत्र लिङ्गम् ।
मीमांसान्यायवेदाध्ययनपटुतरैः पण्डितैर्मण्डिता या
भूदेवो यत्र भूपो यजनवसुमती साऽस्ति मे तीरभुक्तिः ॥८८७॥

योगो नाभ्यसितो व्रतञ्च चरितं दानं न दत्तं मया
गंगातीर····निर्मलजलैः स्नात्वा हरिर्नार्चितः ।
श्यामाङ्गी वरकुङ्कुमेन रचिता नालिङ्गिता कामिनी
इत्थं जन्म निरर्थकं क्षितिपतेऽरण्ये यथा मालती ८८८।

················ ·······मधुरिपोः पीता पटी नेक्ष्यते
नो वो कुञ्जकुटीरकेषु दुरितध्वंसी स वंशीरवः ।
································

कृत्वा गोकुलमाकुलं स मथुरां प्रायः प्रभुः प्रस्थितः ॥८८९॥

चलितश्चकितश्छन्नः प्रयाणे तव भूपते ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥८९०॥

शंकरमिश्रस्य

---

१—धीरेन्द्रोपाध्यायं प्रत्युक्तिरियम् । २—'शिष्योपशिष्यैरुपगीयमानमिति; तद्वेद श्रीमण्डनमिश्रधाम' इति च पाठान्तरम् ।

किं कथयामि रहस्यं पुरमथनरहःसभापरेषाम् ।
उरसि फणपतिः शिखी ललाटे शिरसि विधुः सुरधुनी जटायाम् ॥८६१॥

## अथ नवरसानां पद्यानि

गुरुसविधे राधाया माधववदनाभिलाषिणी नयने ।
पञ्जरसञ्चरमाणं खञ्जनमिथुनं तिरस्कृतम्(?)[1] ॥८६२॥

कृष्णः किं कुरुते गतः स मथुरामित्याकलय्योद्धवा-
दन्तर्हासतया क्षणार्धमपि न स्थातुं क्षमा यौवनात् ।
विस्फूर्जत्करतालिकापटुरविप्रोत्फुल्लगण्डस्थलं
निःशंकं कथयन्ति गोपसुहृदः कुब्जारतिं श्रीपतेः ॥८६३॥

रणभुवि दशकण्ठकण्ठकाण्डे दशरथनन्दनसायकावलूने ।
हृदि मयदुहितुर्दृगम्बुसिक्तैः करुणास्यास्तरुणा बभूव भूयः[2] ॥८६४॥

आगर्भमाबद्धममर्षशीलः पितुः स्मरन् क्षत्रकृतापराधम् ।
परश्वधेनैव भृगुप्रवीरः प्राणैर्वियोज्यापि रिपूँश्छिनत्ति[3] ॥८६५॥

आचार्यौ द्वारिहेतौ(?) शरकलशभरौ(?) द्रोणभूस्तत्समानो
भीष्मस्तातस्य तातो धनुषि न सदृशाः कर्णदुर्योधनाद्याः ।
इत्थं हन्तव्यचिन्ताकुलहृदयतया कौरवाणां पुरस्ता-
द्दीव्यद्दोःस्तम्भशाली समिति(?) विजयते पाण्डवः खाण्डवारिः[4] ॥८६६॥

दृष्ट्वा गरुत्मति समुद्धृतपारिजात-
मभ्युद्यतास्त्रमजितं न जितं परेण ।
देवाधिपस्य परिमीलननेत्रमाल-
मेवारणे वपुषि वेपथुराविरासीत्[5] ॥८६७॥

कुशान् शिरोभिः करयोर्विधाय
श्यामांस्तिलान्मण्डितकालखण्डैः ।

---

१—शृङ्गारस्य । २—करुणस्य । ३—रौद्रस्य । ४—उत्साहस्य । ५—भयस्य

स्थाने रिपूणां रुधिरैस्तनोति
तृप्तिं पितृणां भृगुवंशवीरः[1] ॥८६८॥

चित्रमत्र चरितं मनोभवो गोपिकाः शृणुत दत्तचेतसः ।
श्रीपतिः परमशोभनाकृतिः कुब्जया चिरतरं वशीकृतः[2] ॥८६६॥

शत्रौ मित्रेऽप्युदासीना तथा काञ्चनकाचयोः ।
कदाचिच्चेतसो वृत्तिः शुभा मम भविष्यति[3] ॥६००॥

## अथ षड्ऋतुवर्णनम्

### वसन्तवर्णनम्

विस्फूर्जन्मलयानिलोद्धूतलसत्प्रोत्फुल्लपद्मोत्कर-
क्रीडन्मञ्जुलचञ्चरीकमधुरोद्घोषैः धिव्यथाः ।
प्राप्यन्ते प्रमदाधरोद्गतमिलन्माध्वीकधारारसो-
त्प्राणप्राप्तमनोरथैः सुकृतिभिः ······रमी वासराः ॥६०१॥

श्रीविद्याकरमिश्रस्य

समयमधिवसन्तं गन्धवाहाग्रणीकं
कुसुमशरमधिज्यं जेतुकामं प्रणम्य ।
वदति रचय · ·· · ····विषये
ते········ ·········किं धनुभङ्गमेति ॥६०२॥

तस्यैव

कुत्रापि किंशुकवनानि विरेजुरुच्चैः
पुष्पाणि वह्निमिलितानि वसन्तमध्ये ।
कुत्रापि न ·· ····करन्दसु(?) पानमत्ता
गायन्ति मल्लिलतिकामधि षट्पदाश्च[4] ॥६०३॥

तस्यैव

---

१—बीभत्सस्य । २—अद्भुतस्य । ३—शान्तस्य । ४—उन्मीलमित्यादिपूर्व-
लक्षितमत्रत्यं बोद्धव्यम् ।

## अथ ग्रीष्मवर्णनम्

पटीरमपि पाटीर कोटरे स्थातुमिच्छति ।
अहो मध्याह्नमहिमा पिपासति पयः पयः ॥९०४॥

प्राचां

छाया प्रीतिं वितरति बहुला मुग्धकान्तेव भूयो
धीरो वायुः स्पृहयति वनितापीनवक्षोजवच्च ।
सूर्य्यो ग्रीष्मे विरह इव मुहुर्भावयत्येव तापं
मुग्धस्त्रीणामधरमिव सुखञ्चाददत् शीततोयम् ॥९०५॥

श्रीविद्याकरमिश्रस्य

## अथ वर्षावर्णनम्

इह सन्तमसे घनागमे सुखितं भानवमैन्दवं वपुः ।
तडिदुज्ज्वलदीपलेखया हरितोऽमूः परितो विचिन्वति ॥९०६॥

प्राचाम्

मन्दं मरुद्वहति गर्जति वारिवाहो
विद्युल्लता स्फुरति कूजति नीलकण्ठः ।
एतावति व्यतिकरे रघुनन्दनस्य
मूर्च्छैव केवलमभूदवलम्बनाय ॥९०७॥

हनुमतः

मेघा गर्जन्त्यभीक्ष्णं प्रतिदिशि चपला निर्विशंकं विरेजु-
र्नृत्यन्तोन्मुक्तकण्ठाः किल शिखिनिचयास्संनदन्ति स्म भूयः ।
वातो रोमाञ्चमुग्रं जनयति रजनी घोररूपान्धकारै-
र्वर्षायां तत्र काचिद्रमयति दयितं कापि मूर्च्छां जगाम ॥९०८॥

श्रीविद्याकरमिश्रस्य

आयाता सखि वर्षा वर्षादपि वासरो दीर्घः ।
दिशि दिशि नीरतरङ्गो नीरतरङ्गो ममापि हृदयेशः ॥९०९॥

## अथ शरद्वर्णनम्

दिनकरकरसंगोत्तप्तगात्रस्य रात्रौ
शरदि शशिकला सा सौख्यमेवं करोति ।
सकलहृदयतापं संहरन्तो समन्ता-
द्विरहविधुरपत्युः प्रौढ़कान्तेव तूर्णम् ॥६१०॥

विद्याकरमिश्रस्य

हिमकरशुभतेजःशुभ्रवस्त्रं दधाना
सुरपथमुडुमुक्ता गूहितं केशपाशम् ।
परमरसिकमोदं वर्द्धयन्ती समन्ता-
दभिसरति च दोषा शारदी बालिकेव ॥६११॥

## अथ हेमन्तवर्णनम्

विभीषयति शीतलं जलमहिर्वपुष्मानिव
प्रलोभयति कामिनीस्तन इवास्तधूमोऽनलः ।
सुताप्तय इव त्विषो दिनमणेः सुखी कुर्वते
कुटुम्बकटुवागिव व्यथयते तुषारेऽनिलः ॥६१२॥

सानन्दं सा हिमानी विशति मम वपुः प्रौढ़कान्तेव कान्तं
मर्य्यादां हा विहाय प्रसरति रजनी कामुकीवभिकामम् ।
निद्रा नेत्रं विदूरात्परिहरति मुहुर्वारयोषेव निःस्वं
हेमन्तस्यास्य चर्य्यामधिरजनि जनो मादृशो वेद नान्यः ॥६१३॥

## अथ शिशिरवर्णनम्

निशायां विस्तीर्णायां शिशिरसमये स्वं प्रियतमं
समालिङ्गन्ती शय्यामधिमविरलं(?) सा प्रियतमा ।
समाशेते सा····स्या मम तु विधिहताया विरहदो
मनोजन्मा सन्तापी वहति पवनो मोहजनकः ॥६१४॥

श्रीविद्याकरमिश्रस्य

## अथ कूटादिपद्यानि

पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥९१५॥

केशाः कज्जालिकाः शोभाः करकारपिनाकिनः ।
विविगो गतयो दद्युः शम्वोचाब्धिनगौकसः ॥९१६॥

स्तनमण्डलमाश्रित्य नखस्य वरयोषिताम् ।
कदाकर्णयते गीतं रमया सह रङ्गराट् ॥९१७॥

बरीबरामाछभातमछरी········· पापरा ।
एककरोटी करमहीनग्रीवमगदारिका ॥९१८॥

'सागपात'भयत्रस्ता चकम्पे गोपमण्डली ।
नोन ते लवणं कुर्य्यादित्याह भगवान् हरिः ॥९१९॥

राघवस्य शरैस्तीक्ष्णैर्घोरे रावणमाहवे ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥९२०॥

सन्ध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः ।
अत्र क्रियापदं गुप्तं बुधैरपि न बुद्ध्यते ॥९२१॥

रावणेन हृता सीता सीतया रावणं विना ।
विना रावणसीताभ्यां रामोऽहं दशकन्धरः ॥९२२॥

रावणेन हृता सीता कृष्णपक्षे सिताऽष्टमी ।
अर्धरात्रे दिनस्यार्धे अर्धचन्द्रार्धभास्करे ॥९२३॥

फाल्गुनं कृष्णपक्षे या द्वितीयातिथिरूपिणी ।
साश्रिता सूतचन्द्रांशौ सौरीदेवो भवोत्तमा ॥९२४॥

आषाढ़ी कार्त्तिकी माघी वचा हिङ्गु[1] हरीतकी ।
कर्त्तृकर्मक्रियाबोधे दत्तः षाण्मासिकोऽवधिः[2] ॥९२५॥

संग्रामे च शिरः कायाज्जहाराशु पुरस्य वै ।
इहैव पिहितः कर्ता बुधैरपि न बुद्ध्यते ॥९२६॥

यातमोरिवाघमामाशुभे(?) सभा लुनाति पूतलोका(?) ।
पातमोरिहोमानाथभालस्थानं(?) भूयादेव ॥९२७॥

सा रमा न वरारोहा नगे भागमनाहि या ।
याहि नामगभागेन हारो रावण मार सा ॥९२८॥

आगताः पाण्डवाः सर्वे दुर्य्योधनसमीहया ।
तस्मै गाश्च सुवर्णाश्च रत्नानि विविधानि च ॥९२९॥

नदीज[3] लंकेशवनारिकेतुर्नागाह्वयो[4] नाम नगारिसूनुः[5] ।
एषोऽङ्गनावेषधरः प्रमाथी[6] जित्वाव यं नेष्यति चाद्य गा वः ॥९३०॥

बालभारतस्य

अर्जुनस्य इमे वाणा नेमे वाणाः शिखण्डिनः ।
सीदन्ति मम गात्राणि माघ मा[7] सेगवा[8] इव ॥९३१॥

गोकर्णासमुखीकृतेन इषुना गोपुत्रसंप्रेषिता
गोशब्दात्मजभूषणं शुचि हितं सुव्यक्तगोसुप्रभम् ।
दृष्ट्वा गोगत कं जहार मुकुटं गोशत्रुगोपूरिवै
गोकर्णासनमर्दनश्च न ययावप्राप्य मृत्योर्वशम् ॥९३२॥

---

१—शुण्ठीति पाठान्तरम् । २—गयायां पिण्डदानेन पुण्या श्लेष्महरानृणीति माण्डागारपाठः, पृ० १८८ । ३—नद्याः गङ्गायाः जातो भीष्मः । ४—अर्जुनः । ५—इन्द्रपुत्रः । ६—नाशकर्त्ता । ७—'कर्कटीत्यर्थः । कर्कट्याः सन्तानम् । ८—कर्कट्या अपत्यानि यथा प्रसवकाले तस्या अङ्गानि विदार्य बहिर्गच्छन्ति तथैवेमे बाणाः ममाङ्गानि विदारयन्तीत्यर्थः ।

सर्वस्वेतेवमाहेयीवनो जाता त्रिहायनी ।
उपातिष्ठत पाञ्चाली वासितेव महागजम् ॥९३३॥

सालीनासालीनामपिवृन्देसालसालीना ।
शालीनाशालीना गोप्त्रा क्रियते शिशुत्वशालीना ॥९३४॥

यथा नयति कैलाशं नगं गानसरस्वती ।
तथा नयति कैलाश न गङ्गा न सरस्वती ॥९३५॥

अधीते तु महाभाष्ये व्यर्था सा पदमञ्जरी ।
नाधीते तु महाभाष्ये व्यर्था सापदमञ्जरी ॥९३६॥

पथ्ये सति गदार्त्तस्य किमौषधिनिषेवणम् ।
पथ्येऽसति गदार्त्तस्य किमौषधिनिषेवणम् ॥९३७॥

तावानुजेनामरराजतेजसा ।
महावनानी वसुपर्ण स्वना ॥९३८॥

जयद्रथवधे राजन् दुर्योधनधनञ्जयौ ।
सवितारमुदीचेतां प्रोढ़ाबालावधूरिव ॥९३९॥

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः[1] ॥९४०॥

सकरीभगवत्तेन प्रेज्यमाणो मुहुर्मुहुः ।
न करोति वचस्तस्य निर्धनस्येव योषितः ॥९४१॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता[2] ॥९४२॥

---

१ — सुकेश्याः' इति पाठान्तरम् । २ चन्द्रोदयवर्णनम् । संगृहीता अमी श्लोकाः श्रीविद्याकरसत्कवेः । सहस्रकप्रसिद्ध्यर्थं लिख्यन्तेऽ येऽग्रजन्मनः—इत्थं त्योतिर्विदा श्रीमद्-पूल्लशर्म्मेणा पूरितम् ।

## अथ विविधप्रकारकानि पद्यानि

पातु त्वां नगनन्दिनी गणपतिं क्रोडे निधायार्भकं
तस्यैकं स्तनमनने प्रददती हास्यं मुहुः कुर्वती ।
स्वीयास्यप्रतिबिम्बितं गजमुखं दृष्ट्वा तदीयस्तने
मातस्ते कुचमध्यगं लरिशिशुं देहीति सम्भाषिणम् ॥९४३॥

अधः शेते शम्भुस्तव चरणमाधाय हृदये
बहिर्द्वारे दौवारिलपदमुपेतः कमलजः ।
विडौजा वैफल्यं भजति निजविज्ञापनकृते
तवाहं दासः स्यामिति मनसि लज्जा भयमपि ॥९४४॥

प्रथमवयसि दत्तं[1] तोयमल्पं स्मरन्तः
शिरसि निहितभारं नारिकेलो नराणाम् ।
सलिलममृतकल्पं दद्युराजीवनान्तं
नहि कृतमुपकारं साधवो विस्मरन्ति ॥९४५॥

राजन्मा गाः कवीनां वचसि किमपि च प्रत्ययं ते हि लुब्धाः
शश्वन्मालिन्यमिन्दोस्त(?) यशसि पुनर्निर्म्मलत्वं वदन्ति ।
पश्येन्दोरन्तराले वसति मृगशिशुस्त्वद्यशोऽन्तर्द्धरित्री
दिङ्मातङ्गेन्द्रलीलाचलनवनमयोदंनदाद्याः पदार्थाः ॥९४६॥

कीर्त्तिस्वर्गतरङ्गिणीभिरभितो वैकुण्ठमाप्लावितं
क्षीरोदोऽपि भवत्प्रतापदहनज्वालाभिरुत्तापितः ।
इत्येवं दयितायुगेन हरिणा त्वं याचितः स्वाश्रयं
हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान् ॥९४७॥

अस्तंगते भास्वति नान्धकारान्
शनैश्चरो हन्ति विधौ बुधश्च ।
पितुर्गुणैर्न प्रतिभाति पुत्रो
गुणान्वितो यः स गुणेन भाति ॥९४८॥

१—पीतमिति पाठान्तरम् ।

वेदस्याध्ययनन्तदङ्गविषयज्ञानं बहिर्म्मार्जनं
सन्ध्याचारतपांसि यत्र सततं देवादिसन्तर्पणम् ।
सत्यज्ञानमलोलुपत्वमखिले भूते दया चार्जवं
श्रीनारायणपादपद्मनिरतो विप्रः स वै श्रोत्रियः ॥९४९॥

योऽहंकारपरस्तु शास्त्रविमुखो वाक्पण्डितः क्रोधनो
जिह्वाशिश्नपरायणश्शठमतिर्यो हव्यकव्योज्झितः ।
भक्ष्याभक्ष्यविचारशून्यहृदयो नित्यानृतो दाम्भिकः
श्रीनारायणपादपद्मविमुखो विप्रः स वै 'धर्कटः' ॥९५०॥

गन्धाक्षताय शुभमक्षतमानयेति
श्वश्रूमुखादशनिसारमिवाकलय्य ।
प्रस्वेदवारिविरहानलतापयोगा-
न्मुक्तं ददौ गुरुजनस्य करे मृगाक्षी ॥९५१॥

संयायमानस्य नृपस्य वक्त्रा-
द्वज्रोपमो याचकमानिनां यः ।
सोऽयन्नकारो मधुरः सुधातो
नवोननारीसुरतप्रसङ्गे ॥९५२॥

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे प्रयच्छति ॥९५३॥

पयोधरस्यातिभरेण तस्या
मध्यो न भज्येत सुमध्यमायाः ।
बबन्ध दत्वा नवरोमराजीं
मनोभुवेति त्रिवलीगुणेन ॥९५४॥

स··· वाणिज्यलाभाय गच्छ वाराणसीं पुरीम् ।
एकः पञ्चत्वमाप्नोति जायते पुनरष्टधा ॥९५५॥

वासः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनोर्माज्जनं
भक्ष्यं पक्वरसालदाडिमफलं पीयूषतुल्यं पयः ।

एतावत्तुलिते समस्तविभवे[1] धीरस्य कीरस्य मे
हा हा हन्त तथापि जन्मविटपिक्रोडे मनो धावति ॥९५६॥

चातकधूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या।
इह हि पतिष्यति भवतो नयनयुगादपि परं वारि[2] ॥९५७॥

नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलो
नैवोच्चावचभीतिरत्र विदिता नैवोद्धरा वागुरा[3]।
इत्यालोच्य कुरङ्गकेण विहितो नक्षत्रराजाश्रयः
को जानाति विधिर्विधास्यति पुनः स्वर्भानुदन्तव्रणम् ॥९५८॥

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके
वाञ्छन्देशमनातपं विधिवशाद्बिल्वस्य मूलङ्गतः।
तत्राप्यस्य महाफलस्य पतनाद्भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥९५९॥
देवादित्यस्य

यो हि यस्य हितप्रेप्सुः स तद्दोषं पुरः स्पृशेत्।
शाणेन हि मणेर्म्लानभाग एव निघृष्यते ॥९६०॥

महतान्निःसरत्येव दन्तिदन्तोपमं वचः।
कूर्म्मग्रीवेव नीचानां निःसरेत्प्रविशेत्पुनः ॥९६१॥

कपाटमुद्धाटय लोललोचने
कन्दर्पशत्रुर्मम पृष्ठलग्नः।
आकृष्य बाणं शिथिलीकरोति
चन्द्रानने त्वां शरणागतोऽस्मि ॥९६२॥

गुणप्रयुक्ताः परमर्मभेदिनः
शरा इवावंशभवा भवन्ति।

१—पाठः संसदि रामनाम सततमिति भाण्डागारपाठः, पृ० २३८। २—'इह हि भविष्यति भवतो नयनयुगादेव वारिणा पूरः, इति भाण्डागारपाठः, पृ० २३६। ३—'कुह चिन्न वागुरा भङ्गुराः' इति भाण्डागारपाठः, पृ० २४५।

तथाविधा ये तु विशुद्धवंशा
व्रजन्ति चापा इव तेऽतिनम्रताम् ॥९६३॥

सिंहनक्रगजभल्लपन्नगा-
स्सन्दशन्तु बलिनो न दुःखदाः ।
किन्तु मां व्यथयते पिपीलिका
चाण्डकोशतलमध्यदंशिनी ॥९६४॥

ह्रीरूपा च दिगम्बरी त्रिजगतां मातापि सद्यौवना
कन्याद्रेरपि कोमला त्रिभुवनव्याप्ताप्यदृश्या जनैः ।
साध्वी चाक्रमते सुभर्तृहृदयं श्यामा जगन्मोहिनी
चित्रं रूपमवस्थिता भवतु सा ते सम्पदे साम्प्रतम् ॥९६५॥

जह्नोर्ज्जठरनिवासात्स्वयमनुभूय भूयसीं बाधाम् ।
मन्ये जननि (जगति?) जनानां जठरनिवासं निवारयसि ॥९६६॥

यद्यपि बहु नाधीतं तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो माभूत् सकलः शकलं सकृत् शकृत् ॥९६७॥

रसना दशनानिष्टं निवारयति सर्वदा ।
दशनो रसनादंशी कर्म्मेदं कठिनात्मनाम् ॥९६८॥

त्वद्वाहव्यूहवेगक्षतधरणितले वैरिरामाश्रुपङ्के
क्षिप्तं मत्तेभकुम्भस्खलनपरिलसन्मौक्तिकं तत्र बीजम् ।
तज्जाता कीर्तिवल्ली गगनवनचरी मूलमस्याः फणीन्द्रः
शुभ्राण्यभ्राणि पत्राण्युडुगणकलिका चन्द्रमाः फुल्लपुष्पम् ॥९६९॥

एक···कितातदनुमेधनशून्यता च
क्व स्थापयामि दयितामहमद्वितीयाम् ।
इत्याकलय्य विकलः किल चन्द्रमौलि-
रर्द्धाङ्गिनीमचलराजसुताञ्चकार ॥९७०॥

दुर्गा-दुर्गेतिवाणी प्रसरति सहसा यस्य वक्त्रात्कदाचि-
त्कृत्वाङ्के पाति यत्नात्सुतमिव कमला तन्तु नारायणोऽपि ।
किं ब्रूमस्तस्य भाग्यं प्रमथगणपतिः सावधानो यदर्थे
ब्रह्माशीर्वादमुच्चैर्निरवधि कुरुते स्वस्तिवाक्यं यमोऽपि ॥९७१॥

शूलं शूली चक्रमादाय चक्री वज्रं वज्री पाशमादाय पाशी ।
धावन्त्यग्रे पृष्ठतः पार्श्वयोश्च दुर्गादुर्गा वादिनो रक्षणाय ॥९७२॥

आपाणिग्रहणादतिप्रणयिनी कण्ठस्थिताहं विभोः
सर्वैरेव हरिप्रियेतिकला(?)सोऽप्युच्यते माधवः ।
नो तेनापि दुनोमि मत्सुतगणाः पद्मासुतस्यानुगा
वाण्येत्याधिनिवारणाय सततं संगीयते वीणया ॥९७३॥

अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम् ।
इदमाभरणं नितम्बिनीनामितरं भूषणमङ्गदूषणाय ॥९७४॥

विलसदिन्दुसमाननशालिनी
सरसकोमलवागभिवादिनी ।
विमलविद्रुममौक्तिकमालिनी
भवति पुण्यवतां निजगेहिनी ॥९७५॥

गोप्यो न दोषो मथुराङ्गनायाः
कृष्णस्य धूर्त्तस्य हि रीतिरेषा ।
विपर्य्ययो येन कृतः स्वपित्रो-
स्तस्योपपत्नीपरिवर्त्तने किम् ॥९७६॥

परदेशनरेशसेवनं परवित्तोचितपौरुषग्रहः ।
परयोषिति भाववन्दनं परितापाय भवन्ति केवलम्[1] ॥९७७॥

---

१—निजदेशनरेशसेवनं निजवित्तोचितपौरुषग्रहः ।
निजयोषिति भाववन्दनं परिणामाय भवन्ति केवलम् ॥ —इति पाठान्तरम् ।

कुचावस्याः केचित् करिकरभकुम्भाविति परे
वदन्त्यन्ये वक्षस्सरसि कमले काञ्चनघटौ ।
असौ मे सिद्धान्तः स्फुरति मदनेन त्रिजगतीं
विनिर्जित्य न्युब्जीकृतमिव निजं दुन्दुभियुगम् ॥९७८॥

नतौ कमलकोरकौ समरुचौ रवीन्दूदये
न चापि कनकाचलौ युगलतानतस्य श्रुता ।
सुधाघटयुगन्न वाऽनशनतोपि यत्प्रीतिदं
प्रभूततपसः फलं कलय कस्य कल्याणिनः ॥९७९॥

संगमविरहविकल्पे वरमिह विरहो न संगमस्तस्याः ।
संगे सैव तथैका त्रिभुवनमपि तन्मयं विरहे । ९८०॥

पीनतुङ्गकठिनस्तनान्तरे कान्तदत्तमबलानखक्षतम् ।
आवृणोति विवृणोति वीक्षते लब्धरत्नमिव निर्धनो जनः ॥९८१॥

एकेन रोमनालेन जातं पङ्केरुहद्वयम् ।
ज्ञात्वाधो धनमस्यास्ति खनन्ति निशि रागिणः ॥९८२॥

स्निग्धमालपसि रुक्षमेव वा
त्वत्कथैव सखि मे रसायनम् ।
शीतलं सलिलमुष्णमेव वा
पावकं हि शमयेन्न संशयः ॥९८३॥

स्वकीयं हृदयं भित्वा निर्गतौ यो पयोधरौ ।
हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥९८४॥

अर्द्धं प्रेमनिबद्धमर्द्धमपरं लज्जाश्रितं मानसं
एवं नेत्रसरोरुहं प्रियमुखे चान्यद्गवाक्षेऽर्पितम् ।
पर्य्यङ्के पदमेकमेव धरणीपृष्ठे च कृत्वापरं
स्थातुं गन्तुमपि प्रभातसमये शक्नोति नैवाबला ॥९८५॥

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिपो वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः ॥६८६॥

यत्साकांक्षविलोकनं यदुभयोर्दूतीजनप्रेक्षणं
अद्य श्वो भविता समागम इति प्रीतिप्रसारश्च यः ।
सम्प्राप्ते च समागमे सरभसं यच्चुम्बनालिङ्गनं
तत्कामस्य फलं तदेव सुरतं शेषः पशूनामपि ॥६८७॥

कुशलन्तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतान्न कथयामि या श्वसिति ॥६८८॥

कठोरतार्किकालापैरलङ्कार ······रः क्रिया ।
वासीकुठारकुद्दालैर्नासाभरणरञ्जनम् ॥६८९॥

मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयत्नजनितोऽयमनुग्रहो मे ।
श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतो-
र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥६९०॥

गच्छेति वक्तुमिच्छामि तत्प्रियम(?)त्प्रियैषिणी ।
निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥६९१॥

क्षोणी यस्य रदे मृणालशकलं मूलार्णवः पल्वलं
स्वर्गङ्गावसनं विभाति गगनं कस्तूरिकालेपनम् ।
चन्द्रश्चारुललाटचन्दनमुडुश्रेणीगतामाल्यतां
तेन श्रीधरणीधरेण हरिणा हिन्दूपतिः पाल्यताम् ॥६९२॥

उमापत्युपाध्यायस्य

·····················चन्द्रः सुवचनममृतं दिग्जयः श्रीश्च लक्ष्मी-
र्दोर्दण्डः पारिजातो भ्रुकुटिकुटिलतासंगरे कालकूटः ।

तीव्रं तेजोग्निरौर्वः पदमजन…………………स्तटिन्यः
पारावारो गुणानामतुलरसमयः पातु हिन्दूपतिर्वः ॥६६३॥

उमानाथोपाध्यायस्य

पुरो वा पश्चाद्वा क्वचिदपि वसामि क्षितिपते
न मे काचिद्वानिर्वचनरचनैः क्रीतजगतः ।
अगारे कान्तारे कुचकलशहारे मृगदृशां
मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ॥६६४॥

कालिदासस्य

नैतत् प्रिये चेतसि चिन्तय त्वं करा हिमांशोरपि तापयन्ति ।
वियोगतप्तं हृदयं मदीयं तत्र स्थिता त्वं परितापितासि ॥६६५॥

जागर्त्तु लोको ज्वलतु प्रदीपः सखीजनः पश्यतु कौतुकेन ।
धैर्यं कुतः कामिनि कामुकानां पिबेत्तृषार्त्तः करसम्पुटेन ॥६६६॥

स्तोत्रेऽपवर्गमपि धारयसि प्रयत्ना-
त्त्वां स्तवीति यदि केवलरिक्थलब्ध्यै ।
धन्यस्स बुद्धिरहितो हि जनो नितान्तं
तत्रापि सालसमनास्त्वमपीश धन्यः ॥६६७॥

अरे यमभटाः शठाः कपटविग्रहे तूद्भटा
निवेदयत वो यमं न च तवाधिकारो मयि ।
अहञ्च शिवसुन्दरीचरणयुग्मपङ्केरुह-
स्खलन्मधुसुधारसं मम(?) पिबन्न जानीथ रे ॥६६८॥

धनं दारादासो जनकजननीसूनुसुहृदो
ममेतिज्ञानेन त्रिभुवनविमोहं जनयसि ।
किमन्यद्विश्वेषां पतिमपि नवीनं शिशुमिव
क्षिपन्त्या मोहाब्धौ जननि तव मायान्तरतु कः ॥६६९[१]॥

इति विद्याकरसहस्रकं समाप्तम्

---

१—अत्रादर्शपुस्तके द्वित्राणि पद्यानि अधिकानि आसन् किन्तु तेषामत्यन्तबीभत्सपरत्वात्तानि प्रकाशनानर्हाणीति मत्वा परित्यक्तानि ।

# शुद्ध्यशुद्धिपत्रम्

| पृष्ठ | पङ्क्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| १ | १३ | ममेतत् | ममैतत् |
| ,, | ,, | रमेमः | रश्मेः |
| ,, | १४ | दास | अर्थि |
| ,, | २० | प्रीतिमता | प्रीतिमना |
| २ | ११ | अहिनाथ | अहिनाथः |
| ,, | १४ | काष्ठाः | काष्ठा |
| ४ | ५ | रागोज्ज्वले | रागोज्ज्वलो |
| ,, | ७ | बिसग्रासग्रहोऽपि | बिसग्रासग्रहेऽपि |
| ५ | ५ | मज्जीरेण | मञ्जीरेण |
| ,, | ,, | निर्णीयते | निर्जीयते |
| | ९ | समर्था | समर्थां |
| | १८ | विविधः | विविध |
| | २ | वकः | बकः |
| | २० | समुल्लुलति | |
| | २१ | यूना | यूना |
| ,, | २१ | उल्लुलत् | समुच्छलत् |
| | २ | जरातुरस्य | जवातुरस्य |
| ,, | ,, | जिगीपा | जिगीषा |
| | ६ | उन्मोटते | उन्माट्यते |
| ,, | १२ | प्रेक्षमाणे | प्रेक्ष्यमाणे |
| ,, | ,, | अन्तरिक्षं | अन्तरिक्षे |
| | १७ | प्रतिभिया | प्रतिभया |
| ,, | १८ | विरहसि | विहरसि |
| ,, | २१ | फेरुजरुत्तरेण | फेरुजरत्तरेण |
| ,, | २२ | यूनोः | यूनो |
| | ४ | रोपस्य | रोषस्य |
| | ९ | नाशोच्यान् | माशोच्यान् |
| | १४ | कुक्कुटालय | कुक्कुरालय |
| | १६ | जातः स्तन्यं | जातस्तन्यं |
| | २४ | मलिनां | मलिन |
| ,, | ,, | गोः | यत् |
| ,, | २५ | श्वालब्धा | श्वालब्ध्वा |
| ९ | २ | वाञ्छति | वाञ्छति |
| ,, | ६ | देशान्तेषु | देशास्तेषु |
| ,, | १९ | शुचिता | शुचिना |
| ,, | २१ | निरोद्धुं | निरोद्धुं |
| १० | १ | दूरान्मुक्त | दूरोन्मुक्त |
| ,, | ५ | करिकरेण | करिवरेण |
| ,, | १८ | त्वतं | त्वयं |
| ,, | ,, | अङ्कुशोद्भेदनात् | अङ्कुशो भेदनात् |
| ,, | २० | ये | मे |
| ११ | १४ | शिरशि | शिरसि |
| ,, | ,, | सृणि | शृणि (?) |
| ,, | २३ | करज | करञ्ज |
| ,, | २४ | क्षितभृतः | क्षितिभृतः |
| १५ | २१ | चरितं | रचितं |
| ,, | २२ | क्षीणोऽपि | क्षीणेऽपि |
| १६ | १३ | तस्यैत् | तस्यैतत् |
| १६ | २१ | सरिति | सरसि |
| १७ | २ | पक्ष्मभ्या | पक्ष्माभ्यां |
| १८ | १९ | मा धावता तव | मा धाव तात |
| २० | १४ | धूस्स्थूरकम् | धूस्थूरकम् |
| २० | १८ | देव | दैव |
| २१ | ४ | अनु | अन्त |
| ,, | ,, | लक्ष्यति | लक्ष्यते |
| २१ | १८ | प्रति | अपि |
| ,, | १९ | निरतो भूः | निरतोऽभूः |
| ,, | २१ | शङ्करमिश्रस्येदं पद्यम् | |
| २३ | २ | अनुकल्पनीयः | अनुकम्पनीयः |
| ,, | ३ | चिरादिवाः | चिरादितराः |
| ,, | ,, | परिधाय | परिहाय |
| ,, | १७ | प्रसिद्धि | प्रसिद्धं |
| २४ | २ | पयोचित | यथोचित |
| २५ | १६ | केतकमपि | केतकिमपि |
| ,, | २४ | श्लिष्टेयं | श्लिष्टोऽयं |
| २६ | १२ | जरदरविन्दे | दरदरविन्दे |

| पृष्ठ | पङ्क्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| २६ | २२ | निरसतः | निवसतः |
| ,, | ,, | वारिभ्रमः | वा विभ्रमः |
| २७ | ८ | पङ्कजनी | पङ्कजिनी |
| ,, | २० | इव | इह |
| २८ | २४ | वस्तु | वर्ण |
| ,, | ,, | बन्धैः | वर्णैः |
| ,, | ,, | श्रमः | क्रम |
| २९ | ६ | मलिनमा | मलिनिमा |
| ,, | १५ | बहुवीक्षते | मुहुरीक्षते |
| ,, | १८ | चक्रवाकी | चक्रवाकि |
| ३० | १३ | मज्जति | रज्यति |
| ३३ | १ | वृत्तिः | वृत्ति |
| ,, | ३ | जीवन् | जीवत् |
| ३५ | १२ | केतकि | केतक |
| ३६ | १२ | निरस्यतो | निरस्यता |
| ३७ | १५ | अमुना | अरिणा |
| ३९ | २ | नवनीरता | बहुनीरता |
| ,, | १५ | त्वमसि | त्वामव |
| ४१ | १७ | अम्बुदेन | अम्बुदेव |
| ४५ | १७ | मास्म भूता० | मा स्म भूः |
| ४६ | ३ | कविना० | करुणा० |
| ,, | ४ | राहुवदार्दितोऽपि | राहुरदार्दितोऽपि |
| ४६ | ७ | सन्तापः | सन्ताप |
| ,, | १० | नियोग | वियोग |
| ,, | ११ | समुदति | समुदेति |
| ४७ | ४ | किन्तु | किन्तु |
| ,, | २१ | जनतः | जनितः |
| ,, | ,, | चेष्टितैः | चेष्टितम् |
| ५२ | १० | जातो | जात्या |
| ,, | १४ | दुःसाढु | दुःसोढु |
| ,, | २१ | कुटजा अपि | तरुजाद्यपि |
| ५७ | ४ | सज्जल | कज्जल |
| , | ५ | गत | गतः |
| ,, | ८ | युष्म | युष्मद् |
| , | १० | चुवसौ | चुदसो |
| ५९ | ३ | वर्षति वर्षासु | वर्षति वर्षति वर्षासु |
| ६२ | ८ | वेत्ति | वेति |
| ६३ | १९ | दोषौधान | दोषाधान |
| ,, | २२ | दोषाद्दोष | दोषद्योष |
| ६६ | १ | बाष्प | वाष्प |
| ,, | ६ | चलत्यचलयोः | चलत्प्रचलयोः |
| ,, | ८ | दीधित | दीधिति |
| ६७ | २ | प्रतिवेशिनी | प्रतिवेश्मनि |
| ६७ | २० | पश्यन्तु | दृष्यन्तु |
| ६९ | ८ | यातः | जातः |
| ७० | १ | बर्तते | वर्तते |
| ७२ | २ | बपुः | वपुः |
| ७३ | ८ | अभिरसति | अभिसरति |
| ७४ | २ | हरित्त्वदिर | हरिन्मुदिर |
| ७६ | २० | द्विरदेन्दु | द्विरदेन्द्र |
| ७७ | १६ | तरुण | त्वरुण |
| ,, | २१ | दर्शयसि | दर्शयसि प्रियं |
| ७८ | २ | अणुभिः | उडुभिः |
| ,, | १४ | केसरभासुर | केशरभास्वर |
| ,, | १५ | समुदियात्व ( ? ) | समुदियादु |
| ७९ | १६ | जीवका | जीविका |
| ८० | १ | गोविन्दठक्कुरस्य | कनिष्ठभ्रातुः श्रीहर्षस्य |
| ८३ | १४ | बद्धो | बन्धो [पद्यम् |
| ८४ | ५ | हूंकारदानान्वित | हूंकारनादान्वितं |
| ८६ | १५ | हुत | हत |
| ,, | १८ | तनुरुहे | तनुरुचो |
| ,, | १९ | वाताः | वान्ताः |
| ८९ | २१ | शिशरे | शिशिरे |
| ११० | १ | तता | ततो |
| ११२ | २२ | जदतानन्दस्य | जगदानन्दस्य |
| ११३ | ७ | उजित | उचितम् |
| ११८ | १५ | नपसक इति | नपुसकमिति |
| १२१ | १३ | मन्ध्यात् | मध्यात् |
| १३१ | ५ | शौर्य | शौर्य्यम् |
| १३२ | १९ | कर्करजस्य | कर्कराजस्य |
| १४७ | ९ | यांता | जाता |

# पद्यकाराणां सूची

# पद्यानुक्रमणिका

फ



ब